# ॥ गृहप्रवेशप्रयोगसङ्ग्रहः ॥

## ॥ वास्तु मण्डलम् ॥

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| 61 | | | | | | 54 | | | | | | 55 |
| | 50 | | | | | 46 | | | | | 52 | |
| | | 14 | 15 | 16 | 17 | 18 | 19 | 20 | 21 | 22 | | |
| | | 45 | 10 | | | | | | 11 | 23 | | |
| | | 44 | | 9 | 2 | | | 3 | 24 | | | |
| | | 43 | | 8 | 1 | | | 4 | 25 | | | |
| 60 | 49 | 42 | | | | | | | 26 | | 47 | 56 |
| | | 41 | | | | | | | 27 | | | |
| | | 40 | | 7 | 6 | | | 5 | 28 | | | |
| | | 39 | 13 | 36 | 35 | 34 | 33 | 32 | 12 | 29 | | |
| | | 38 | 37 | | | | | | 31 | 30 | | |
| | 54 | | | | | 48 | | | | | 53 | |
| 59 | | | | | | 58 | | | | | | 57 |

सङ्गृहीता– कोड्मण्णु राघवेन्द्र कम्बारण्णायः

॥ श्रीः ॥

गृहप्रवेशपूर्वदिने (दिवा उपोषितः) सायं स्नातः धृतशुभ्रवस्त्रः कृतनित्यक्रियः ब्राह्मणबन्धुपरिवारसहितः सपत्नीकः यजमानः नूतनगृहद्वारमुपेत्य, कारुकारेण स्थपतिपूजां कारयेत् ।

शिल्पी द्वारमध्ये स्वस्तिकोपरि व्रीहिराशौ शिल्पशस्त्राणि निधाय, वस्त्रेणाच्छाद्य,

इमं यजमानमुद्धिश्य गृहनिर्माणे कृतद्रुमच्छेद शिलाच्छेद भूखनन दोषपरिहारार्थं वास्तुब्रह्मादिदेवतापीत्यर्थं स्थपतिपूजां करिष्ये ॥

इति सङ्कल्प्य,

वास्तुपुरुषाय नमः । ब्रह्मणे नमः । गणेशाय नमः । दुर्गायै नमः । श्रियै नमः । इन्द्रादि लिकपालेभ्यो नमः । भूम्यै नमः । ध्रुवाय नमः । गुरवे नमः । स्तम्भाय नमः । द्वारशाखेभ्यो नमः । शस्त्रदेवताभ्यो नमः ॥

इति नाममन्त्रैरावाह्य, षोडशोपचारैः सम्पूज्य, ताभ्यः देवताभ्यः लाजबलिं दत्वा, प्रार्थयेत् ।

धरानिपातात् पवनप्रकोपाद्दंष्ट्राभिघातात् सलिलप्रकोपात् ।
अग्नेः प्रदाहान्नृपचोरभीते रक्षन्तु देवाः सगृहं गृहस्थम् ॥
तुभ्यं नमो गृहस्थस्य शुभं कुरुत नित्यशः ।
आयुरारोग्यमैश्वर्यं सुप्रीताः सर्वदेवताः ॥

ततो यजमानः – दारुभिर्निर्मितं गेहं धृढं सौम्यं शिलामयम् ।
अस्माकन्तु निवासार्थं देहि त्वं शिल्पिसत्तम ॥ त्वया कृतमिदं गेहं निवासाय सुखं मम ।

देहि मे शिल्पशास्त्रज्ञ मौल्यं स्वीकृत्य हर्षितः ॥
कारुकारः– गृहमेधीयजं पुण्यं दशांशं देहि मे विभो । तद्गृहीत्वा मुदा गेहं प्रदास्यामि नरोत्तम ॥
यजमानः– गृहमेधीयजं पुण्यं न दास्यामि कदाचन । त्वयेप्सितं धनं रत्नं गृहाणालयकारक ॥
कारुकारः– मयाकृतमिदं गेहमाज्ञया तव वै प्रभो । प्रयच्छामि निवासार्थं वृद्धिर्भवतु ते सदा ॥ मया कृतमिदं गेहं धृढं सौम्यं सुदारुभिः । गृहाणाहं प्रदास्यामि निवासार्थं सबन्धुभिः ॥
ततो यजमानः शिल्पिनं ताम्बूलवस्त्रादिना परितोष्य, श्रीसूक्तं पठन् गृहं परिगृह्य, प्रविशेत् ॥ (तत्र स्थपतिना द्वारशाखोपरि शस्त्रेण त्रिरेखाः कुर्यादिति आचारवेशेषः)
ततः गृहमन्तर्बहिश्च– यदत्र सम्स्थितं भूतं स्थानमाश्रित्य तिष्ठति । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । स्थानादस्मात् व्रजन्त्यन्यत् स्वीकरोमि गृहन्त्विमम् ॥ इति सर्षपान् विकीर्य, सुधालेपन तोरण ध्वज दीप पूर्णकुम्भाद्यैरलङ्कृत्य, कुलदेवताप्रार्थना पूर्वक गुरुब्राह्मणान् नमस्कृत्य, तेभ्योनुज्ञातः, गुरुगणपतिपूजनं, पुण्याहवाचनं, आचार्यवरणञ्च कृत्वा, सुधाकलशाराधानं कुर्यात् ।
गृहस्यैकदेशे चतुरस्रारत्निविस्तारं शिलाखण्डद्वयं सुनिश्चलं समस्थौल्यं निधाय, तत्र–
सुधामथनजे पूर्वं पृथिव्या अभिसम्भवे । सर्वैश्च वन्दितासि त्वं दूर्वे

सर्वात्मिके नमः ॥
इति दूर्वान् प्रच्छाद्य, तेषु व्रीहिराश्युपरि सुधालिप्तं तन्तुवेष्टितं कुम्भमेकं संस्थापयेत् । तस्मिन्कुम्भे व्रीह्यादिसर्वभीजानि सुवर्ण रत्नौषध पञ्चत्वक् पञ्चपल्लव पञ्चगव्य पञ्चामृत पञ्चमृत्तिका दूर्वाङ्कुरानि तत्तन्मन्त्रैरापूरयेत् । तत्र दर्भरज्जुं, त्रिगुणीकृतसूत्रं, गौरसर्षपांश्च निक्षिपेत् । कलशे तत्वायामीति वरुणं, ब्रह्म जज्ञानमिति ब्रह्माणं, इदं विष्णुरिति विष्णुं, त्र्यम्बकं यजामहेति महेशं, सक्तुमिवतितेति लक्ष्मीं, पावका न इति सरस्वतीं, गौरीर्मिमायेति गौरीं, इन्द्रश्रेष्ठानित्यादिभिः दिक्पालकान्, क्षेत्रस्य पतिनेति क्षेत्रपालं, वास्तोष्पते प्रतिजानीहीति वास्तोष्पतिञ्चावाह्य, शन्नसूक्तं, राक्षोघ्नसूक्तञ्च त्रिर्जपित्वा, अन्यैश्च रक्षाकरैर्मन्त्रैरभिमन्त्र्य, षोडशोपचारैः सम्पूज्य, तत्कलशोदकेन गृहमन्तर्बहिश्च प्रदक्षिणतः राक्षोघ्नसूक्तं पठन् त्रिः प्रोक्षेत् । कलशस्थबीजानि गृहस्य परितः ईशानादारभ्य, प्रदक्षिणाकारेणावपेत् । सर्षपान् अघोरमन्त्रं जपन् गृहे सर्वत्र विकिरेत् । दर्भरज्जुना, त्रिगुणीकृतसूत्रेण च ईशानादारभ्य गृहं वेष्टयेत् ।

शन्न इन्द्राग्नीति  पञ्चदशर्चा वसिष्ठ ऋषिः। त्रिष्टुप् छन्दः । विश्वेदेवाः देवताः ॥

शं न॑ इन्द्रा॒ग्नी भ॑वता॒मवो॑भि॒ः शं न॒ इन्द्रा॒वरु॑णा रा॒तह॑व्या ।
शमि॒न्द्रासो॑मा सु॒वि॒ताय॒ शं योः शं न॒ इन्द्रा॒पू॒षणा॒ वाज॑सातौ ॥

शं नो भगः शमु नः शंसो अस्तु शं नः पुरन्धिः शमु सन्तु रायः ।

शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥

शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।

शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥

शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम् ।

शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः ॥

शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृतये नो अस्तु ।

शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥

शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः ।

शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टाग्नाभिरिह शृणोतु ॥

शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः ।

शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्व१ः शम्वस्तु वेदिः ॥

शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु ।

शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥

शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।

शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥

शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।

शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भुः ॥

शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।

शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।

शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥

शं नो अज एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्य१ः शं समुद्रः ।

शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपाः ॥

आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः ।

शृण्वन्तु नो दिव्याः पार्थिवासो गेजाता उत ये यज्ञियासः ॥

ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः ।

ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥

कृणुष्वपाजेति अष्टादशाणां विश्वेदेवा ऋषयः । त्रिष्टुप् छन्दः ।

रक्षोहाग्निर्देवता ॥

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्टीमनु प्रसितिं दूणानोऽस्तासि विद्य रक्षसस्तपिष्ठैः ॥
तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।
तपूँष्यग्ने जुह्वा पतङ्गानसन्दितो वि सृज विष्वगुल्काः ॥
प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशँसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥
उदग्ने तिष्ठप्रत्याऽऽतनुष्व न्य१मित्राँ ओषतात् तिग्महेते ।
यो नो अरातिँ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥
ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥
स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥
सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥
अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरता मियं गीः ।

स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥

इह त्वा भूर्या चरेदुप त्मन् दोषावस्तर्दीदिवाँसमनु द्यून् ।

क्रीडन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवाँसो जनानाम् ॥

यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।

तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग् जुजोषत् ॥

महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।

त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥

अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः ।

ते पायवः सध्रियञ्चो निषद्याऽग्ने तव नः पान्त्वमूर ॥

ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।

ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो ना ह देभुः ॥

त्वया वयँ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् ।

उभा शँसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥

अया ते अग्ने समिधा विधेम प्रति स्तोमँ शस्यमानं गृभाय ।

दहाशसो रक्षसः पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्यात् ॥

रक्षोहणं वाजिनमाऽजिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म ।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् ॥
वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥
उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ ।
मदे चिदस्य प्ररुजन्ति भामा न वरन्ते परिबाधो अदेवीः ॥
ये देवाः पुरःसदोऽग्निनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ये देवाः दक्षिणसदो यमनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ये देवाः पश्चात्सदः सवितृनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ये देवाः उत्तरसदो वरुणनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ये देवाः उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहाऽग्नये रक्षोघ्ने स्वाहा यमाय रक्षोघ्ने स्वाहा सवित्रे रक्षोघ्ने स्वाहा वरुणाय रक्षोघ्ने स्वाहा बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा ॥

ये देवाः अधःसदो वासुकिनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ॥ ये देवाः ऊर्ध्वसदो ब्रह्मनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ॥ ये देवाः सर्वसदो दुर्गानेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ॥ ये देवाः विश्वसदो विष्णुनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ॥

ततः सप्तशिद्धिं कुर्यात् ।

खननं हरणं दाहः पूरणं गोनिवासनम् । विप्रोच्छिष्टं पञ्चगव्यं सप्तैते स्थानशुद्धयः ॥

खनन– खादिरं खनित्रं गन्धादिभिरभ्यर्च्य,

अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥

इति गृहेशान्यभागे अरत्निमात्रं चतुरश्रं गर्तं खनित्वा,

हरण– ह्रीं स्फुर स्फुर –––हुं फट् ॥ इत्यघोरास्त्रेण तत्रस्थ मृदं हृत्वा, गृहाद्बहिर्नैरृत्यां निरस्य, अप उपस्पृश्य,

दाह– दर्भादिभिः अग्निमादाय, वि ज्योतिषा –– रक्षसे विनिक्षे ॥

इति गर्तं सन्दह्य, तद्भस्म नैरृत्यां निरस्य, अप उपस्पृश्य,

पूरण– शुद्धकृत्तिकाभिः पूर्णादर्वि–––शतक्रतो ॥ इति तद्गर्तमापूर्य, गोनिवासन– आ गावो इत्यष्टर्चस्य सूक्तस्य बार्हस्पत्यो भरध्वाज ऋषिः । प्रथमा पञ्चमादि तिस्रः त्रिष्टुभः, द्वितीयादि तिस्रः जगत्यः, अन्त्यानुष्टुप् छन्दांसि । गावो (इन्दो वा) देवता ॥

आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे रणयन्त्वस्मे ।

प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहानाः ॥

इन्द्रो यज्वने पृणते च शिक्षत्युपेद्ददाति न स्वं मुषायति ।

भूयो भूयो रयिमिदस्य वर्धयन्नभिन्ने खिल्ये नि दधाति देवयुम् ॥

न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति ।

देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ॥

न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुप यन्ति ता अभि ।

उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरन्ति यज्वनः ॥

गावो भगो गाव इन्द्रो मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः ।

इमा या गावः स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥

यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकम् ।

भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥

प्रजावतीः सूयवसं रिशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः ।
मा वः स्तेन ईशत माघशंं सः परि वो हेती रुद्रस्य वृज्याः ॥
उपेदमुपपर्चनमासु गोषूप पृच्यताम् ।
उप ऋषभस्य रेतस्युपेन्द्र तव वीर्ये ॥
इति सवत्सां गां नवागारे सर्वत्र चारयित्वा, ग्रासं दत्वा,
विप्रोच्छिष्ठ– यथोपलब्धेनान्नेन, फलादिना वा, प्रजापते नत्व–––
रयीणाम् ॥ इति ब्राह्मणान् तर्पयित्वा,
पञ्चगव्य– पञ्चगव्येन आपोहिष्ठादि तिसृभिः, एतोन्विन्द्रमिति
तिसृभिः, कया नश्चित्र इति द्वाभ्यां, यदन्ति यच्चेति पावमानीभिश्च
सर्वत्र गृहं प्रोक्षेत् ॥ ततो राक्षोघ्नहोमं कुर्यात् ॥
गृहस्याग्नेय्यां दिशि समचतुरस्रं कुण्डं स्थण्डिलं वा विधाय,
सङ्कल्प– अस्मिन् गृहे मन्त्र तन्त्र यन्त्रौषधाद्याभिचार प्रयोगनिरसनार्थं,
भूत प्रेत पिशाच वेतालादि निरसनार्थं, गृहरक्षार्थं, राक्षोघ्नसूक्तहोमं
करिष्ये ॥
स्थण्डिलस्यैशान्यभागे कलशमेकं महीध्यौरित्यादिना प्रतिष्ठाप्य,
तस्मिन् रक्षोहणं वाजिनमिति रक्षोहाग्निं, जातवेदसे इति पञ्चमन्त्रैः
क्रमात् राधां, उमां, लक्ष्मीं, सावित्रीं, दुर्गां, मूलेन (अस्त्रेण सुदर्शनं)
अघोररुद्रञ्चावह्य, षोडशोपचारैः सम्पूज्य, रक्षाकरैर्मन्त्रैरभिमन्त्रयेत् ।
ततः स्वगृह्योक्तविधिना स्थण्डिलोल्लेखनादि वरदनामानमग्निं

प्रतिष्ठाप्य, अन्वादध्यात् ।

१– अत्रप्रधानं रक्षोहणं, विज्योतिषा इति द्वाभ्यां पक्वं, प्रधानदेवतां रक्षोहाग्निं कृणुष्व पाजेत्यष्टादशभिः, ये देवा इतिपञ्चभिः, जातवेदसादि पञ्चभिः, सद्योजातादि पञ्चभिः एकैकवारमाज्येन, पुनः सुदर्शनं सुदर्शनास्त्रेण (अघोररुद्रं अघोरास्त्रमन्त्रेण)१०८वारं अपामार्गसमिदाज्यचर्वाज्यद्रव्यैः, शेषेण– ॥

२– अत्रप्रधानं रक्षोहणं, विज्योतिषा इति द्वाभ्यां पक्वं, प्रधानदेवतां रक्षोहाग्निं कृणुष्व पाजेत्यष्टादशभिः, अग्निं राक्षोघ्नं, यमं राक्षोघ्नं, सवितारं राक्षोघ्नं, वरुणं राक्षोघ्नं, बृहहस्पतिं राक्षोघ्नं क्रमात् ये देवा इतिपञ्चभिः, राधां, उमां, लक्ष्मीं, सावित्रीं, दुर्गां, क्रमात् जातवेदसादि पञ्चभिः, सद्योजातं, वामदेवं, अघोरं, तत्पुरुषं, ईशानं क्रमात् सद्योजातादि पञ्चभिः एकैकवारमाज्येन, (पुनरग्निं राक्षोघ्नं यदपामार्ग इति मन्त्रेण १०८वारं अपामार्गसमिधा) पुनः (सुदर्शनं सुदर्शनास्त्रेण) अघोररुद्रं अघोरास्त्रमन्त्रेण १०८वारं अपामार्गसमिदाज्यचर्वाज्यद्रव्यैः, शेषेण– ॥

राक्षोघ्नमन्त्रस्य  पायुर्भरधाज ऋषिः । त्रिष्टुब्छन्दः । रक्षोहाग्निर्देवता ॥ रक्षोहणं वाजिनमाजिघर्मि हृदयाय नमः । मित्रं प्रतिष्ठमुपयामि शर्म शिरसे स्वाहा । शिशानो अग्निः क्रतुभिः समिद्धः शिखायै वषट् । स नो दिवा सरिषः पातु नक्तं कवचाय हुम् । रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रतिष्ठमुपयामि शर्म नेत्रत्रयाय वौषट् । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा सरिषः पातु नक्तं अस्त्राय फट् ॥

त्रिशूलं परशुं चैव कपालं डमरुं तथा । बिभ्राणं बभ्रुवपुषं त्रिनेत्रं चन्द्रशेखरम् ॥ दंष्ट्राकराळवदनं भ्रुकुटीकूटिलाननम् । वढवाग्निसमाकारं दहन्तं भुवनत्रयम् ॥ भूतप्रेतपिशाचादीन्तर्जयन्तं महाप्रभूम् । एवं ध्यायेन्महादेवं रक्षोहाग्निं समाहितः ॥

ॐ रक्षोहणं वाजिनमाऽ जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् ॥

अस्य श्री अघोरास्त्रमन्त्रस्य  अघोर ऋषिः । अनुष्टुप् छन्दः । अघोररुद्रो देवता ॥

ॐ ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर हृदयाय नमः । घोर घोर तर तनुरूप शिरसे स्वाहा । चट चट प्रचट प्रचट शिखायै वषट् । कह कह वम वम कवचाय हुम् । बन्धय बन्धय घातय घातय नेत्रत्रयाय वौषट् । हुं फट् अस्त्राय फट् ॥

सजलघनसमाभं भीमवक्त्रं त्रिनेत्रं भुजगधरमघोरं रक्तवस्त्राङ्गरागम् । परशुडमरुखड्गान्खेटकञ्चापबाणे त्रिशिखनरकपाले बिभ्रतं भावयामि ॥

॥ ॐ ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोर तर तनुरूप चट चट प्रचट प्रचट कह कह वम वम बन्धय बन्धय घातय घातय हुं फट् ॥

अस्य श्री सुदर्शनास्त्रमन्त्रस्य  अहिर्बुध्न्य ऋषिः । अनुष्टुप् छन्दः । सुदर्शनो देवता ॥

आचक्राय हृदयाय नमः ।  विचक्राय शिरसे स्वाहा । सुचक्राय शिखायै वषट् । धिचक्राय कवचाय हुम् । सञ्चक्राय नेत्रत्रयाय वौषट् ।

ज्वालाचक्राय स्वाहा अस्त्राय फट् ॥

कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम् । चक्रं शङ्खं गदाब्जे पृथुतरमुसलं चापपाशाङ्कुशान् स्वैर्बिभ्राणैर्दोर्भिराढ्यं मनसि मुररिपुं भावयेच्चक्रसञ्ज्ञम् ॥

॥ ॐ सहस्रार हुं फट् ॥

कृणुष्वपाजेति अष्टादशाणां विश्वेदेवा ऋषयः । त्रिष्टुप् छन्दः ।

रक्षोहाग्निर्देवता ॥ (सूक्तं पूर्वोक्तम्)

ये देवाः पुरःसदोऽग्निनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढँ रक्षः संदग्धँ रक्ष इदमहँ रक्षोऽभि सं दहाम्यग्नये रक्षोघ्ने स्वाहा ॥

ये देवाः दक्षिणसदो यमनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढँ रक्षः संदग्धँ रक्ष इदमहँ रक्षोऽभि सं दहामि यमाय रक्षोघ्ने स्वाहा ॥

ये देवाः पश्चात्सदः सवितृनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढँ रक्षः संदग्धँ रक्ष इदमहँ रक्षोऽभि सं दहामि सवित्रे रक्षोघ्ने स्वाहा ॥

ये देवाः उत्तरसदो वरुणनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढँ रक्षः संदग्धँ रक्ष इदमहँ रक्षोऽभि सं दहामि वरुणाय रक्षोघ्ने स्वाहा ॥

ये देवाः उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्तेनः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढँ रक्षः संदग्धँ रक्ष इदमहँ रक्षोऽभि सं दहामि बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा ॥

जातवेदसेति पञ्चर्चाणां काश्यपो दुर्गा त्रिष्टुप् ॥ (?)

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताद्यग्निः ॥
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥
अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि वश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥
विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरिताति पर्षि ।
अग्ने अत्रिवन्नमसा गृणानो३स्माकं बोध्यविता तनूनाम् ॥

पृतनाजितँ सहमानमुग्रमग्निं हुवेम परमात्सधस्थात् ।
स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अतिदुरिताऽत्यग्निः ॥
सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवे भवे नातिभवे भवस्व माम् । भवोद्भवाय नमः ॥
वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः
कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय
नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते
अस्तु रुद्ररूपेभ्यः ॥
तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माऽधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा
शिवो मे अस्तु सदाशिवोम् ॥
अपामार्गहोममन्त्र– ॐ यदपामार्गः सपत्नहा सहस्राणां पुष्टिवर्धनाय ।
यन्मे शिरसि पापं केशेषु निहितं ललाटे पृष्ठे जठरे च । यद्विश्वं
सर्वस्य भेषजोऽपमार्गोऽवलुम्पतु (स्वाहा)॥
होमान्ते अपामार्गरस हुतभस्म मिश्रितकलशोदकेन राक्षोघ्नसूक्तं जपन्

गृहं त्रिः प्रदक्षिणं मार्जयेत् ॥

ततः ग्रहपूजां (प्रवेशेऽह्नि वा) वास्तुपूजाहोमबलिदानानि कुर्यात् ॥

गृहस्यैशान्यभागे हस्तमात्रं समचतुरस्रं भूमिं गोमयेनानुलिप्य, वास्तुपूजार्थं मण्डलमुद्धरेत् ।

<table>
<tr><td>श्वेत</td><td colspan="5"></td><td>रक्त</td><td colspan="5"></td><td>रक्त</td></tr>
<tr><td rowspan="5"></td><td>शङ्ख</td><td colspan="4"></td><td>प्रवाल</td><td colspan="4"></td><td>पावक</td><td rowspan="5"></td></tr>
<tr><td rowspan="4"></td><td>नील</td><td>जल</td><td rowspan="2">कृष्ण</td><td rowspan="2">श्याम</td><td rowspan="2">शेत</td><td rowspan="2">नभ</td><td rowspan="2">धूम्र</td><td>नभ</td><td>धूम्र</td><td rowspan="4"></td></tr>
<tr><td>कुमुद</td><td>श्वेत</td><td>नील</td><td>अब्ज</td></tr>
<tr><td colspan="2">कपिल</td><td>जपा</td><td colspan="3">श्वेत</td><td>मधु</td><td colspan="2">इन्द्रचाप</td></tr>
<tr><td colspan="2">उत्पल</td><td rowspan="3">कृष्ण</td><td colspan="3" rowspan="3">रक्त</td><td rowspan="3">रक्त</td><td colspan="2">रक्त</td></tr>
<tr><td>पीत</td><td>सित</td><td colspan="2">कनक</td><td colspan="2">अञ्जन</td><td>हेम</td><td>कृष्ण</td></tr>
<tr><td rowspan="5"></td><td rowspan="4"></td><td colspan="2">स्फटिक</td><td colspan="2">पद्मराग</td><td rowspan="4"></td><td rowspan="5"></td></tr>
<tr><td colspan="2">मुक्ता</td><td>पीत</td><td colspan="3">शातकुम्भ</td><td>अरुण</td><td colspan="2">भृङ्ग</td></tr>
<tr><td>शङ्ख</td><td>प्रवाल</td><td rowspan="2">उत्पल</td><td rowspan="2">कृष्ण</td><td rowspan="2">श्वेत</td><td rowspan="2">जपा</td><td rowspan="2">शिति–कण्ठ</td><td>शुक्ल</td><td>धूम्र</td></tr>
<tr><td>हरिद्र</td><td>धूम्र</td><td>सित</td><td>पावक</td></tr>
<tr><td>नील</td><td colspan="4"></td><td>हेम</td><td colspan="4"></td><td>हेम</td></tr>
<tr><td>अञ्जन</td><td colspan="5"></td><td>श्वेत</td><td colspan="5"></td><td>धूम्र</td></tr>
</table>

पिष्टानिलिप्तसूत्रेण, श्वेतमृद्भिर्वा (शान्ता यशोवती कान्ता विशाला प्राणवाहिनी । सती च सुमना नन्दा सुभद्रा सुरथा इति ॥) शान्तायै नमः । इत्यादिभिः प्रागायताः दक्षिणोपक्रमाः उदगपवर्गाः दशरेखाः, (हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया । जया कला

विशोकेडादशमी संस्मृता बुधैः ॥) हिरण्यायै नमः । इत्यादिभिः उदगायताः पश्चिमोपक्रमाः पूर्वसमाप्तिकाः दशरेखाः उल्लिखेत् । एवं एकाशीतिपदानि भवन्ति । तन्मध्ये नवपदं, तद्दिक्षु चत्वारि त्रिपदानि, विदिक्षु चत्वारि एकपदानि, तद्बाह्ये ईशानादि प्रतिकोणेषु चत्वारि एकपदानीति षोडशपदानि, प्रतिदिक्षु पञ्च द्विपदानीति विंशति पदानि, एवं पञ्चचत्वारींशत्पदानि भवन्ति । तत्पदेषु पञ्चवर्णैः तत्तद्देवतावर्णैः, प्रागादि प्रादक्षिण्येन कृष्णरक्तसितश्यामपीतश्वेतारुणासितैर्वा पूरयेत् । तद्बाह्ये श्वेतरक्ताभ्यां वीतिद्वयं कुर्यात् ।

तत्र मद्ये कः, तद्बाह्ये पूर्वादि आर्यकसवितृविवस्वानिन्द्रमित्रराजयक्ष्मा भूधरापवत्साः, तद्बाह्यकोणेषु ईशानादि अब्सावित्रेन्द्रजयरुद्रजयाः, तद्बाह्ये पूर्वे ईशानादि शिखीपर्जन्यजयन्तकुलिशायुधसूर्यसत्य भृशान्तरिक्षाः दक्षिणे आग्नेयादि वायुपूषाविपथगृहतक्षयमगन्धर्व भृङ्गराजमृगाः, पश्चिमे नैरृत्यादि पितृदौवारिकसुग्रीवपुष्पदन्तवरुणासुर शोषपापयक्ष्माणः, उत्तरे वायव्यादि रोगनागमुख्यभल्लाटसोमसर्पादिति दितयः, तद्बाह्ये वीत्यां पूर्वादि दिक्षु स्कन्दार्यमाजृम्भकपिलिपिञ्चाः, ईशानादि विदिक्षु चरकीविदारीपूतनापापराक्षस्यः, तद्बाह्यवीत्यां इन्द्रादयः दिक्पालाः एवं देवतास्थानानि । तेषु प्रतिदैवतं आढकपरिमितं श्वेततण्डुलराशिं कृत्वा, तदुपरि अग्नुत्तरणपूर्वक पञ्चगव्येन शुद्धीकृताः तत्तद्देवतावर्णवस्त्र वेष्टिताः ब्रह्मादिदेवताप्रतिमाः प्रतिमाभावे नारिकेलफलानि पूगफलानि वा स्थापयेत् । मण्डलस्य उत्तरभागे (नैरृत्ये) वास्तुहोमार्थं यथासम्भवं कुण्डं स्थण्डिलं वा

विधाय, तदीशान्ये (मण्डलपूर्वे वा) अष्टदलपद्ममध्ये समन्त्रकं कलशमेकं (द्वे, नव वा) विधिवत् प्रतिष्ठाप्य, वास्तुपूजामारभेत् ।

<table>
<tr><td>ईशानः</td><td colspan="5"></td><td>इन्द्रः</td><td colspan="5"></td><td>अग्निः</td></tr>
<tr><td rowspan="5"></td><td>चरकी</td><td colspan="4"></td><td>स्कन्दः</td><td colspan="4"></td><td>विदारी</td><td rowspan="5"></td></tr>
<tr><td rowspan="4"></td><td>शिखी</td><td>पर्जन्यः</td><td rowspan="2">जयन्तः</td><td rowspan="2">कुलिशायुधः</td><td rowspan="2">सूर्यः</td><td rowspan="2">सत्यः</td><td rowspan="2">भृशः</td><td>अन्तरिक्षः</td><td>वायुः</td><td rowspan="4"></td></tr>
<tr><td>दितिः</td><td>अपः</td><td>सावित्रः</td><td>पूषा</td></tr>
<tr><td colspan="2">अदितिः</td><td>अपवत्सः</td><td colspan="3">आर्यकः</td><td>सविता</td><td colspan="2">विपथः</td></tr>
<tr><td colspan="2">अहिः</td><td rowspan="3">भूधरः</td><td colspan="3" rowspan="3">ब्रह्मा</td><td rowspan="3">विवस्वान्</td><td colspan="2">गृहतक्षः</td></tr>
<tr><td>सोमः</td><td>पिलिपिञ्छः</td><td colspan="2">सोमः</td><td colspan="2">यमः</td><td>अर्यमा</td><td>यमः</td></tr>
<tr><td rowspan="5"></td><td rowspan="4"></td><td colspan="2">भल्लाटः</td><td colspan="2">गन्धर्वः</td><td rowspan="4"></td><td rowspan="5"></td></tr>
<tr><td colspan="2">मुख्यः</td><td>राजयक्ष्मा</td><td colspan="3">मित्रः</td><td>इन्द्रः</td><td colspan="2">भृङ्गराजः</td></tr>
<tr><td>नागः</td><td>रुद्रजयः</td><td rowspan="2">शोषः</td><td rowspan="2">असुरः</td><td rowspan="2">वरुणः</td><td rowspan="2">पुष्पदन्तः</td><td rowspan="2">सुग्रीवः</td><td>इन्द्रजयः</td><td>मृगः</td></tr>
<tr><td>रोगः</td><td>पापयक्ष्मा</td><td>दौवारिकः</td><td>पितरः</td></tr>
<tr><td>पापराक्षसी</td><td colspan="4"></td><td>जृम्भकः</td><td colspan="4"></td><td>पूतना</td></tr>
<tr><td>वायुः</td><td colspan="5"></td><td>वरुणः</td><td colspan="5"></td><td>निर्ऋतिः</td></tr>
</table>

सङ्कल्प– सहकुटुम्बकस्य मम धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थ सिद्ध्यर्थं, अस्मिन् गृहनिर्माणसमये मया कारित भूखनन दारुच्छेदन पाषाणखण्डन मूलच्छेद तृणच्छेद कृमिकीटनिपातन जलजीवहनन नानाविधप्राणिहिंसादि दोषनिवृत्त्यर्थं, गृहे राजारि तस्कराग्न्यम्बु शस्त्र शृङ्गि दंष्ट्रि विषादिभिर्भयनिवृत्त्यर्थं, भूकम्प चण्डमारुत घनवृष्ट्यादिभिः रक्षार्थं, अलक्ष्मीरनृत शपथ पौरुषाघातादि बाधापरिहारार्थं, अनृतभाषण

वृक्षपातनादि गृहार्थे यत्कृतं पापमज्ञानेनापि तत्सर्वदोषनिरसनार्थं, ब्रह्मादि त्रिपञ्चाशद्देवताधिष्ठित वास्तोष्पतेः स्थिराधिष्ठानार्थं, समस्तसङ्कट नानाविधरोग क्लेश दुःख विघ्नोपशमनपूर्वक अस्मिन्वास्तौ यावच्चन्द्रार्कपर्यन्तं सुखनिवास स्वर्निवास गृहजसुख सकलसन्मङ्गळावाप्त्यर्थं, अस्य वास्तोः शुभतासिद्ध्यर्थं, वास्तुपूजाबलिहोमाख्य कर्म करिष्ये ॥

घण्टानादं, शङ्खपूजां, गुरुगणेशप्रार्थनां, तदस्तु मित्रावरुणा इति देवतास्थापनं च कृत्वा,

द्वारदेवतापूजा– पूर्वे– द्वारश्रियै । ब्राह्म्यै । माहेश्वर्यै । दक्षिणे– द्वारश्रियै । कौमार्यै । वैष्णव्यै । पश्चिमे– द्वारश्रियै । वाराह्यै । माहेन्द्र्यै । उत्तरे– द्वारश्रियै । चामुण्डायै । महालक्ष्म्यै ॥

पीठदेवतापूजा– गुं गुरुभ्यो । गं गणपतये । दुर्गायै । सरस्वत्यै । क्षेत्रपालाय । मण्डूकाय । कालाग्निरुद्राय । आधारशक्त्यै । मूलप्रकृत्यै । कूर्माय । अनन्ताय । वराहाय । पृथिव्यै । अमृताब्ध्यै । श्वेतद्वीपाय । कल्पवृक्षाय । रत्नोधनाय । माणिक्यमण्टपाय । सुवर्णवेदिकायै । श्वेतछत्राय । धवलचामराय । धर्माय । ज्ञानाय । वैराग्याय । ऐश्वर्याय । अधर्माय । अज्ञानाय । अवैराग्याय । अनैश्वर्याय । अव्यक्तचित्तमूलाय । आनन्दकन्दाय । बुद्धिनालाय । अहङ्कारबीजाय । हं आकाशात्मने कर्णिकायै । यं वाय्वात्मने केसराय । रं अग्न्यात्मने दलाय । वं अमृतात्मने दलाग्राय । लं पृथिव्यात्मने परिवेषाय । अं अर्कमण्डलाय वसुप्रद द्वादशकलात्मने । उं सोममण्डलाय कामप्रद षोडशकलात्मने ।

मं वह्निमण्डलाय धर्मप्रद दशकलात्मने । सं सत्वाय । रं रजसे । तं तमसे । मं मायायै । विं विद्यायै । अं आत्मने । उं अन्तरात्मने । मं परमात्मने । ह्रीं ज्ञानात्मने ॥

नवशक्तिपूजा– सजयायै । विजयायै । जिताह्वयायै । अपराजितायै । नित्यायै । विलासिन्यै । दोग्ध्र्यै । अघोरायै । मङ्गलायै ॥

पीठमन्त्र–ॐ नमो भगवते सर्वभूतात्मने सकलगुणशक्तियुक्ताय ब्रह्मादि त्रिपञ्चाशद्देवताधिष्ठितशरीराय वास्तुपुरुषाय योगपद्मपीठात्मने नमः ॥

ततो वास्तुब्रह्मेन्द्रादित्रिपञ्चाशद्देवतान्, इन्द्रादि लोकपालांश्च तत्तन्मन्त्रैरावाहयेत् ।

मण्डलमध्ये वास्तुपुरुषः– प्रजापति ऋषिः । जगती छन्दः । वास्तुपुरुषो देवता ॥

ॐ हृदयाय नमः । ह्रीं शिरसे स्वाहा । वां शिखायै वषट् । वास्तु कवचाय हुम् । पुरुषाय नेत्रत्रयाय वौषट् । नमः अस्त्राय फट् ॥

तुङ्गोत्तुङ्ग जटाग्र भीषण महाकायाग्रकोटिच्छटाटोपास्फोटित भीमभासुरतनुं वेदास्त्रदेहाश्रयम् । क्रव्यादाधिपतिं प्रतिष्ठिततनुं द्वन्द्वं प्रजेशोन्मुखं पञ्चाशद्गुण देवतालयलसत् कायान्तवास्तुं भजे ॥

॥ ॐ ह्रीं वां वास्तुपुरुषाय नमः ॥

मालामन्त्रः– ॐ नमो भगवते वास्तुपुरुषाय महाबलपराक्रमाय सर्वदेवाधिवासितशरीराय ब्रह्मपुत्राय सकलब्रह्माण्डधारिणे भूभारार्पितमस्तकाय पुरपत्तनप्रासादगृहवापीसरःकूपादि

सन्निवेशसान्निध्यकराय सर्वसिद्धिप्रदाय प्रसन्नवदनाय विश्वम्भराय परमपुरुषाय चक्रशार्ङ्धराय वरदाभयहस्ताय वास्तोष्पतये नमः ॥

वासोष्पते इत्यस्य वसिष्ठ ऋषिः । त्रिष्टुबन्त्या गयत्री छन्दः । वास्तोष्पतिर्देवता । वास्तोष्पत्यावाहने विनियोगः ॥

वास्तोष्पते प्रतिजानीह्यस्मान् हृदयाय नमः । त्वावेशो अनमिवो भवा नः शिरसे स्वाहा । यत्वे महे प्रति तन्नो जुषस्व शिखायै वषट् । शं नो भव द्विपदे शं चतुष्पदे कवचाय हुम् । वास्तोष्पते प्रतिजानीह्यस्मान्स्त्वावेशो अनमिवो भवा नः नेत्रत्रयाय वौषट् । यत्वे महे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे अस्त्राय फट् ॥

वास्तुमूर्ति महाकाय कृष्णाङ्गो रक्तलोचनः । एकाननो द्विबाहुश्च भर्भराङ्गः सुदुर्धरः ॥ वज्रदेहोऽसुराकारः रक्तश्मश्रुशिरोरुहः । ईशान्यमस्तकः क्रुद्धः नैऋत्यगतपादकः ॥ कृताञ्जलिरधोवक्त्रः वासुदेव प्रकीर्तितः ॥

वास्तोष्पते प्रति जानीह्यस्मान्स्त्वावेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥
वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो ।
अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व ॥
वास्तोष्पते शग्मया संसदा ते सक्षीमहि रणवया गातुमत्या ।
पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥

अमीवहा वस्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ॥

वासोष्पते इत्यस्य काण्वो इरिम्बिठि ऋषिः । बृहती छन्दः । (इन्द्रः) वास्तोष्पतिर्देवता । वास्तोष्पत्यावाहने विनियोगः ॥

वास्तोष्पते ध्रुवा स्थूणां सत्रं सोम्यानाम् ।

द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा ॥

आगच्छ भगवन् वास्तो सर्वदेवैरधिष्ठित । भगवन्कुरु कल्याणं क्षेत्रेऽस्मिन्सन्निधौ भव ॥

ॐ भूर्भुवस्वरों भगवन्तं वास्तोष्पतिं एतस्मिन्मण्डले आवाहयामि ॥

१–मध्ये नवपदे नाभौ ब्रह्मा– अज ऋषिः । विराट् छन्दः । ब्रह्मा देवता ॥

ॐ हृदयाय नमः । नं शिरसे स्वाहा । मों शिखायै वषट् । ब्रं कवचाय हुम् । ह्मं नेत्रत्रयाय वौषट् । णें अस्त्राय फट् ॥

ब्रह्माणं पद्मयोनिं सुरगणनमितञ्चाष्टनेत्रं पवित्रं बिभ्राणन्त्वक्षमालां स्रुवमुदधिकरैर्दण्डमब्धेमकुण्डिम् । वन्दे बालार्ककोटिद्युतिमुदधिमुखं पिङ्गजूटाक्षमौलिं नानाकल्पाभिरामं श्रुतिगणजनकं मध्यगं हंसवाहम् ॥

॥ ॐ नमो ब्रह्मणे ॥

ब्रह्माणा त इत्यस्य विश्वामित्र ऋषिः । त्रिष्टुब्छन्दः । (इन्द्रः) ब्रह्मा देवता । ब्रह्मावाहने विनियोगः ॥

ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू ।

स्थिरं रथं सुखमिंद्राधितिष्ठन्प्रज्जानन्विद्वा उप याहि सोमम् ॥
आवाहयामि देवेशमूर्ध्वभागे व्यवस्थितम् । वरहंससमारूढं सूर्यकोटिसमप्रभम् ॥
ॐ भूर्भुवस्वरों भगवन्तं ब्रह्माणं एतस्मिन्मण्डले आवाहयामि ॥
द्वादशनाम– ब्रह्मणे । चतुर्मुखाय । वेधसे । धात्रे । वेदगर्भाय । सृष्टिकर्त्रे । जगद्योनये । पद्मयोनये । प्रजापतये । पितामहाय । कमण्डलुधराय । अजाय ॥
आवरण– ॐ हृदयाय नमः । नं शिरसे स्वाहा । मों शिखायै वषट् । ब्रं कवचाय हुम् । ह्मं नेत्रत्रयाय वौषट् । णें अस्त्राय फट् ॥
प्रथमावरणपूजां समर्पयामि ॥
विष्णवे । रुद्राय । ईश्वराय । सदाशिवाय । ऋग्वेदाय । यजुर्वेदाय । सामवेदाय । अथर्ववेदाय ॥ द्वितीया ––॥
सनकाय । सनन्दनाय । सनातनाय । सनत्कुमाराय । सनत्सुजाताय । विद्यायै । ज्ञानायै । क्षमायै । शमायै ॥ तृतीया ––॥
मरीचये । वसिष्ठाय । अङ्गिरसे । अत्रये । पुलस्त्याय । पुलहाय । क्रतवे । दक्षाय । मित्राय ॥ चतुर्था ––॥
अद्भ्यो । ध्रुवाय । वैतुण्ड्याय । शमाय । शान्ताय । धनुषे । प्रत्यूषाय । प्रभासाय ॥ पञ्चमा ––॥
वीरभद्राय । शम्भवे । गिरीशाय । अजैकपदे । अहिर्बुध्न्याय । पिनाकिने । भुवनाधीश्वराय । विशाम्पतये । पशुपतये । स्थाणवे ।

भवाय ॥ षष्ठा --॥
धात्रे । अर्यम्णे । मित्राय । अंशुमते । अरुणाय । भगाय । इन्द्राय । विवस्वते । पूष्णे । पर्जन्याय । त्वष्ट्रे । विष्णवे ॥ सप्तमा --॥
गगनाय । स्पर्शाय । वायवे । अनिरुद्धाय । मरुते । प्राणाय । प्राणेशाय । जीवेन्द्राय ॥ अष्टमा --॥
शङ्खनिधये । पुष्पनिधये । वसुन्धरायै । वसुमत्यै ॥ नवमा --॥
ब्राह्म्यै । माहेश्वर्यै । कौमार्यै । वैष्णव्यै । वाराह्यै । वेददेवतायै । इन्द्राण्यै । चामुण्डायै । श्रीमहालक्ष्म्यै ॥ दशमा --॥
असिताङ्गभैरवाय । रुरुभैरवाय । चण्डभैरवाय । क्रोधभैरवाय । उन्मत्तभैरवाय । कपालभैरवाय । भीषणभैरवाय । संहारभैरवाय ॥ एकादशा --॥
ब्रह्माण्डपुराणाय । पाद्मपुराणाय । विष्णुपुराणाय । नारदपुराणाय । गरुडपुराणाय । शिवपुराणाय । लिङ्गपुराणाय । भागवतपुराणाय । अग्निपुराणाय । स्कन्दपुराणाय । भविष्योत्तरपुराणाय । ब्रह्मवैवर्तपुराणाय । मार्कण्डेयपुराणाय । वामनपुराणाय । वराहपुराणाय । मत्स्यपुराणाय । कूर्मपुराणाय । आदित्यपुराणाय ॥ द्वादशा --॥
इन्द्राय । अग्नये । यमाय । निरृतये । वरुणाय । वायवे । सोमाय । ईशानाय । अनन्ताय । ब्रह्मणे ॥ त्रयोदशा --॥
वज्राय । शक्त्यै । दण्डाय । खड्गाय । पाशाय । अङ्कुशाय । गदायै । शूलाय । चक्राय । पद्माय ॥ चतुर्दशावरणपूजां समर्पयामि ॥
(सर्वे पद्मासनस्थाः कमलजवदनाः खादिभूतोक्तवर्णाः श्वेताद्याः

पञ्चपञ्चारुणहरिदरुणासित्रभृद्दग्विरिञ्चाः । खेटान्यूर्ध्वोग्रहस्ता
मुकुलितकरयुग्राजिता भूषणाढ्या द्वात्रिंशद्देवतास्ताः शिवमुखगदिता
मन्त्रिणा चिन्तनीयाः ॥ वज्रं शक्तिञ्च खड्गं नववरलतिकां
हस्तपद्मैर्दधाना रौद्रास्या स्कन्दपूषा जगदुदयकरा सर्वभूषाङ्गशोभाः ।
खड्गं सृक्पानपात्रक्षुरिकवरमहाकर्तरीपद्महस्ताः चारक्याद्याश्चतस्रो
विकृतनखमुखा भीषणाश्चिन्तनीयाः ॥)

२–तत्प्राच्यां त्रिपदे दक्षिणस्तने आर्यकः–

खड्गखेटरचिताञ्जलिहस्तं सिंहराजवरकन्धरपीठम् ।
धवलपङ्कजपाण्डुरवर्णं सकलभूषणमार्यकमीढे ॥

त्वमर्यमा इत्यस्य आत्रेयो वसुश्रुत ऋषिः । त्रिष्टुब्छन्दः । (अग्निः)
आर्यको देवता । आर्यकावाहने विनियोगः ॥

त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन्गुह्यं बिभर्षि ।
अञ्जन्ति मित्रं सुधितं न गोभिर्यद्धम्पती समनसा कृणोषि ॥

आवाहयामि देवेशमार्यकं पितृनायकम् ।
महिषं दिव्यमारूढं दण्डपाणिं शुभेक्षणम् ॥

ॐ भूर्भुवस्वरों भगवन्तं आर्यकं एतस्मिन्मण्डले आवाहयामि ॥

३–तद्दक्षिणैकपदे दक्षिणहस्ते सविता–

चक्रं सशङ्खं वरखेटखड्गौ पद्मस्रगालम्बित कम्बुकण्ठम् ।
अहं शचीनाथमणिप्रभासं करैर्दधानं सवितारमीढे ॥

सविता पश्चादित्यस्य लुशो धानाक ऋषिः । त्रिष्टुब्छन्दः । (विश्वेदेवाः)

सविता देवता । सवित्रावाहने विनियोगः ॥

सविता पश्चतात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरातात् ।

सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥

सवितारं सहस्रांशुं सुरासुरनमस्कृतम् ।

लोकनाथं विश्वनेत्रं सूर्यमावाहयाम्यहम् ॥

ॐ भूर्भुवस्वरों भगवन्तं सवितारं एतस्मिन्मण्डले आवाहयामि ॥

४–तत्प्रतीच्यां त्रिपदे जठरदक्षिणभगे विवस्वान्–

ध्यायेद्विवस्वन्तमुदारहारं बालार्कबिम्बारुणमश्ववाहम् ।

दोर्दण्डयुग्माञ्चितखड्गखेटं किरीटिनं तं प्रणमामि नित्यम् ॥

अङ्गिरोभिरेत्यस्य यमो ऋषिः । त्रिष्टुब्छन्दः । (यमः) विवस्वान् देवता । विवस्वतावाहने विनियोगः ॥

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।

विवस्वन्तं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य ॥

एह्येहि देव त्रिगुणात्मकत्वं हैमं समारुह्य तमो नुदस्व ।

हस्तद्वये वै धृतपद्मचक्रं गृहाण पूजां भगवन्विवस्वान् ॥

ॐ भूर्भुवस्वरों भगवन्तं विवस्वन्तं एतस्मिन्मण्डले आवाहयामि ॥

५–तत्पश्चिमैकपदे वृषणयोः इन्द्रः–

वज्रखेटवराभयहस्तं भीमवक्त्रकमुदारविभूषम् ।

नागराजमधिरूढमुल्लसद्रक्तपङ्कजसमुद्यतमीढे ॥

इन्द्रं वो इत्यस्य वैश्वामित्रो मधुच्छन्दा ऋषिः । गायत्री छन्दः । इन्द्रो देवता । इन्द्रावाहने विनियोगः ॥

इन्द्रं वो विश्वतस्परि हवा महे जनेभ्यः । अस्माकमस्तु केवलः ॥

एह्येहि वास्तोर्विबुधाधिपस्त्वं गजाधिरूढो मम रक्षणाय ।
वराप्सरोभिश्च विवीज्यमानो गृहाण पूजां भगवन्नमस्ते ॥

ॐ भूर्भुवस्वरों भगवन्तं इन्द्रं एतस्मिन्मण्डले आवाहयामि ॥

६–तदुत्तरत्रिपदे जटरवामभागे मित्रः–

अश्वारूढं भावयेत्स्वर्णवर्णं मित्रं सर्वैर्भूषणैर्भूषिताङ्गम् ।
खेटं खड्गं वरदञ्चाभयञ्च हस्तैरुच्छैर्बिभ्रतं पद्मनेत्रम् ॥

मित्रो जनानित्यस्य विश्वामित्र ऋषिः । त्रिष्टुब्छन्दः । मित्रो देवता । मित्रावाहने विनियोगः ॥

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुतद्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥

मित्र त्वमेह्येहि तमोपशान्त्यै रत्नाब्जवज्रध्वजयुक्तहस्तः ।
श्यामोर्ध्वभागेऽर्धशितस्वरूपो यथा मनस्थो भगवन्नमस्ते ॥

ॐ भूर्भुवस्वरों भगवन्तं मित्रं एतस्मिन्मण्डले आवाहयामि ॥

७–तदुत्तरैकपदे वामहस्ते राजयक्ष्मा–

इन्द्रनीलसमप्रख्यं यक्ष्माणञ्च द्विलोचनम् ।
ध्यायेद्वराहपृष्टस्थं खड्गखेटवराभयम् ॥

मुञ्चामि त्वेत्यस्य प्राजापत्यो यक्ष्मनाशन ऋषिः । त्रिष्टुब्छन्दः ।

(यक्ष्मघ्नः) राजयक्ष्मा देवता । राजयक्ष्मावाहने विनियोगः ॥

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।

ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥

आवाहयामि तं देवं यक्ष्माणं राजसञ्ज्ञकम् ।

नानाव्याधिसमाकीर्णं रोगैश्च परिशोभितम् ॥

ॐ भूर्भुवस्वरों भगवन्तं राजयक्ष्माणं एतस्मिन्मण्डले आवाहयामि ॥

८–तत्प्राक्त्रिपदे वामस्तने भूधरः–

महीधरं मेचकमेघवर्णं सखेटखड्गाञ्चितपद्महस्तम् ।

सुवर्णमालोज्वलचारुकण्ठं सञ्चिन्तयेच्छवेतवराहवाहम् ॥

न पर्वतेत्यस्य आत्रेयः श्यावाश्व ऋषिः । जगती छन्दः । (मरुतः)

भूधरो देवता । भूधरावाहने विनियोगः ॥

न पर्वता न नद्यो वरन्त वो यत्राचिध्वं मरुतो गच्छथेदु तत् ।

उत द्यावापृथिवी याथना परि शुभं यातामनु रथा अवृत्सत ॥

पृथ्वीधर त्वं मम मण्डलेस्मिन्नाधारभूतो जगतीतलस्य ।

गृहे सुखं देहि सुखप्रदस्त्वं गृहाण पूजां भगवन्नमस्ते ॥

ॐ भूर्भुवस्वरों भगवन्तं भूधरं एतस्मिन्मण्डले आवाहयामि ॥

९–तत्प्रागौकपदे उरसि आपवत्सः–

निर्जीवनाभ्रसदृशप्रभमापवत्सं दोर्भिधृतं भिदुरखेटकपाशखड्गान् ।

सम्भावये धवलकच्छपपृष्ठपीठं केयूरहारमणिकुण्डल–भूषिताङ्गम् ॥

इदमाप इत्यस्य आम्बरीषःसिन्धुद्वीप (त्रिशिरस्त्वाष्ट्रो वा) ऋषिः । अनुष्टुब्छन्दः । (अपः) आपवत्सो देवता । आपवत्सावाहने विनियोगः ॥

इदमापः प्रवहत यत्किञ्च दुरितं मयि ।
यद्वाहमभि दुद्रोह यद्वा शेप उतानृतम् ॥

आपवत्स त्वमेह्येहि कूर्मस्कन्ध वरप्रद ।
पूजां गृहाण देवेश कुम्भहस्त नमोस्तु ते ॥

ॐ भूर्भुवस्वरों भगवन्तं आपवत्सं एतस्मिन्मण्डले आवाहयामि ॥

१०–ईशाकोणादधःकोणैकपदे मुखे आपः–

ध्यायेदापं शङ्खगोक्षीरवर्णं खेटं खड्गं रक्तकीरद्वयाढ्यम् ।
दीर्घैर्दोर्भिः बिभ्रतं कूर्मवाहं नानाकल्पालङ्कृतं नीलकण्ठम् ॥

अप्सु मे इत्यस्य काण्वो मेधातिथि ऋषिः । अनुष्टुब्छन्दः । आपो देवता । अबावाहने विनियोगः ॥

अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निञ्च विश्व शं भुवमापश्च विश्वभेषजीः ॥

अप आवहयिष्यामि सर्वदा वरादाः शिवाः ।
आपस्त्वायान्तु सततं पवित्रा मङ्गलाः शिवाः ॥

ॐ भूर्भुवस्वरों भगवतीः अपः एतस्मिन्मण्डले आवाहयामि ॥

११–आग्नेयकोणादधःकोणौकपदे दक्षिणहस्ते सावित्रः–

नमामि सावित्रमरिष्टशङ्खकृपाणहस्तं मृगराजवाहम् ।

केयूरहारादि विभूषिताङ्गं धूम्रद्युतिं पिङ्गलवर्णकं वा ॥
तत्सवितुरित्यस्य विश्वामित्र ऋषिः । गायत्री छन्दः । (सविता) सावित्रो देवता । सावित्रावाहने विनियोगः ॥
तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥
हे सावित्र इहागच्छ सर्वध्वान्तनिवारक ।
पूजां गृहाण देवेश मया भक्त्या समर्पिताम् ॥
ॐ भूर्भुवस्वरों भगवन्तं सावित्रं एतस्मिन्मण्डले आवाहयामि ॥
१२–नैऋत्यकोणादधःकोणैकपदे मेढ्रे इन्द्रजयः–
इन्द्रसञ्जयमभीष्ट–खेटकोल्लसितखड्गवरान्वितहस्तम् ।
चिन्तयेत्कनकपिङ्गलवर्णं सकलाभरणं वारणवाहम् ॥
जीमूतस्येवेत्यस्य भरद्वाजो पायुर्ऋषिः । त्रिष्टुब्छन्दः । (वर्मा) इन्द्रजयो देवता । इन्द्रजयावाहने विनियोगः ॥
जीमूतस्येव भवति प्रतीकं यद्वर्मीयाति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं  स त्वा वर्मणो महिमा पिपर्तु ॥
आवाहयामि देवमिन्द्रजयं यष्ठिविधारकम् ।
त्वं हि देव समागच्छ क्षेत्रेस्मिन्सन्निधौ भव ॥
ॐ भूर्भुवस्वरों भगवन्तं इन्द्रजयं एतस्मिन्मण्डले आवाहयामि ॥
१३–वायव्यकोणादधःकोणैकपदे वामहस्ते रुद्रजयः–
वृषेन्द्रवाहं कनकाभवासं त्रिशूलखेटाङ्कुशपाशहस्तम् ।
त्रिलोचनं पिङ्गजटाभिरामं सञ्चिन्तयेद्रुद्रजयं प्रभूषम् ॥

त्वमग्ने रुद्रेत्यस्य शौनको गृत्समद ऋषिः । जगती छन्दः । (अग्निः) रुद्रो देवता । रुद्रजयावाहने विनियोगः ॥

त्वमग्ने रुद्रो असुरो महोदिवस्त्वं शर्धो मारुतं पृच्छ ईशिषे ।

त्वं वातैररुणैर्यासि शं गयस्त्वं पूषा विधतः पासिनुत्मना ॥

आवाहयामि तं रुद्रजयं शङ्कररूपिणम् ।

उमाधिष्ठितवामाङ्गं वरदाभयहस्तकम् ॥

ॐ भूर्भुवस्वरों भगवन्तं रुद्रजयं एतस्मिन्मण्डले आवाहयामि ॥

१४–ईशानकोणैकपदे शिरसि शिखी–

ईशानमिन्दुधवलं वृषभेन्द्रवाहं शूलं कपालवरदाभयहस्तमुग्रम् ।

तारेशपावकदिनेश्वरदीप्तनेत्रं एकाननं स्मरतु देवनताङ्घ्रियुग्मम् ॥

अग्ने नयेत्यस्य अगस्त्य ऋषिः । त्रिष्टुब्छन्दः । (अग्निः) शिखी देवता । शिख्यावाहने विनियोगः ॥

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।

युयोध्य१स्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥

आवाहयामि देवेशं शङ्करं शिखिरूपिणम् ।

चतुर्हस्तं त्रिनेत्रञ्च स्रुक्शूलौ दक्षिणे धृतम् ।

डमरुं स्रुवकं वामे स्वाहोमासहितं विभुम् ॥

ॐ भूर्भुवस्वरों भगवन्तं शिखिनं एतस्मिन्मण्डले आवाहयामि ॥

१५–तद्दक्षिणैकपदे दक्षिणनेत्रे पर्जन्यः–

पर्जन्यमञ्जननिभं कमठाधिरूढं पाशाङ्कुशाभयवरान्दधतं कराब्जैः ।
वृष्टिप्रदं सकललोकहितप्रधानं श्वेताम्बरं स्मरतु सर्वविभूषिताङ्गम् ॥
पर्जन्यायेत्यस्य वसिष्ट (आग्नेयो कुमारो वा) ऋषिः । गायत्री छन्दः ।
पर्जन्यो देवता । पर्जन्यावाहने विनियोगः ॥

पर्जन्याय प्रगायत दिवस्पुत्राय मीळ्हुषे । स नो यवसमिच्छतु ॥

आवाहयामि पर्जन्यं यादासां मुख्यनायकम् ।
कुम्भीरथसमारूढं पाशहस्तं वरप्रदम् ॥
ॐ भूर्भुवस्वरों भगवन्तं पर्जन्यं एतस्मिन्मण्डले आवाहयामि ॥

१६–तद्दक्षिणद्विपदे दक्षिणश्रोत्रे जयन्तः–

वन्देजयन्तमसितं तुरगाधिरूढं खड्गात्तखेटशरचापकरं द्विनेत्रम् ।
श्वेताम्बरं सकलसिद्धिजयप्रदं तं सर्वाभिभूषणलसन्तमुदग्रकान्तिम् ॥
अषाळ्हमित्यस्य गौतम ऋषिः । त्रिष्टुब्छन्दः । (सोमः) जयन्तो देवता ।
जयन्तावाहने विनियोगः ॥

अषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ।
भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनुवदेम सोम ॥

आवाहयामि तं देवं महेन्द्रतनयं प्रभुम् ।
मुद्रिकाकङ्कणैर्युक्तं सर्वाभरणभूषितम् ॥
ॐ भूर्भुवस्वरों भगवन्तं जयन्तं एतस्मिन्मण्डले आवाहयामि ॥

१७–तद्दक्षिणद्विपदे दक्षिणांसे कुलिशायुधः–

नीलोत्पलाभमसिखेटमभीष्टहस्तं शक्रं सुरौघनमितं गजराजवाहम् ।

रत्नोज्वलन्मकरकुण्डलहारभूषं देवेश्वरं स्मरतु नेत्रसहस्रयुक्तम् ॥
इन्द्र मरुत्व इत्यस्य विश्वामित्र ऋषिः । त्रिष्टुब्छन्दः । इन्द्रो देवता ।
इन्द्रावाहने विनियोगः ॥
इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः ॥
एहि देव सहस्राक्ष देवारिबलसूदन ।
ऐरावतसमारूढ शचीहृदयनन्दन ।
वज्रहस्तं सुराध्यक्षमिन्द्रमावाहयाम्यहम् ॥
ॐ भूर्भुवस्वरों भगवन्तं कुलिशायुधं एतस्मिन्मण्डले आवाहयामि ॥
१८–तद्दक्षिणद्विपदे दक्षिणबाहौ सूर्यः–
उत्पुल्लरक्तकमलद्युतिमब्जमित्रं खेटासिपद्मयुगलोज्वलमश्ववाहम् ।
नानाविभूषणलसत्परिमण्डिताङ्गं रक्ताब्जमाल्यमसितं स्मरतु द्विनेत्रम् ॥
उत्सूर्य इत्यस्य वसिष्ट ऋषिः । त्रिष्टुब्छन्दः । सूर्यो देवता । सूर्यावाहने
विनियोगः ॥
उत्सूर्यो बृहदर्चींष्यश्रेत्पुरु विश्वा जनिम मानुषाणाम् ।
समो दिवा ददृशे रोचमानः क्रत्वा कृतः सुकृतः कर्तृभिर्भूत् ॥
आवाहयामि देवेशं भास्करं तिग्मतेजसम् ।
कालिङ्गं काश्यपं रक्तं सप्ताश्वं सप्तरज्जुकम् ॥
ॐ भूर्भुवस्वरों भगवन्तं सूर्यं एतस्मिन्मण्डले आवाहयामि ॥

१९–तद्दक्षिणद्विपदे दक्षिणबाहौ सत्यः–

सत्यं विलोचनयुगं वृषचापवर्णं खेटासिभीवरदहस्तमजेन्द्रवाहम् ।
मञ्जीरहारमुकुटादिविभूषिताङ्गं ध्यायेन्महाजननतं भुवनप्रसिद्धम् ॥

ऋतञ्चेत्यस्य माधुच्छन्दस अघमर्षण ऋषिः । अनुष्टुब्छन्दः ।
(भाववृत्तः) सत्यो देवता । सत्यावाहने विनियोगः ॥

ऋतं च सत्यं चाभीद्धात्तपसोध्यजायत ।
ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥

आवाहयामि तं सत्यं पुण्ययुक्तमकल्मषम् ।
पद्महस्तं महाबाहुं वरदं निर्मलं शुभम् ॥

ॐ भूर्भुवस्वरों भगवन्तं सत्यं एतस्मिन्मण्डले आवाहयामि ॥

२०–तद्दक्षिणद्विपदे दक्षिणकूर्परे भृशः–

बन्धुजीवकरुचं युगपद्मखड्गखेटकयुगं श्रुतिहस्तैः ।
बिभ्रतं भृशकमुज्वलभूषं स्मरत पाण्डुरकीरविभूषम् ॥

सोमं राजानमित्यस्य अगिस्तापस ऋषिः । अनुष्टुब्छन्दः । (विश्वेदेवाः)
भृशो देवता । भृशावाहने विनियोगः ॥

सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ।
आदित्यान्विष्णुं सूर्यं ब्रह्माणञ्च बृहस्पतिम् ॥

आवाहयेहं भृशमादिदेवं सञ्चारशीलं भुवनत्रयेपि ।
एकेन हस्तेन वरं दधानं ह्यभीतिदानं त्वपरेण दोष्णा ॥

ॐ भूर्भुवस्वरों भगवन्तं भृशं एतस्मिन्मण्डले आवाहयामि ॥

२१–तद्दक्षिणैकपदे दक्षिणप्रबाहौ अन्तरिक्षः–

अन्तरिक्षमुडुपालसुवर्णकं खड्गखेटवराभयहस्तम् ।
स्वर्णभूषणभूषितकायं स्मरतु नेत्रयुगं मृगवाहम् ॥

आदित्प्रत्नस्येत्यस्य काण्वो वत्स ऋषिः । गायत्री छन्दः । (इन्द्रः) अन्तरिक्षो देवता । अन्तरिक्षावाहने विनियोगः ॥

आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥

आवाहये तमाकाशं विष्णोः पदमनन्तकम् ।
यत्र देवास्तथा यक्षा ग्रहाः सर्वे प्रतिष्ठिताः ॥

ॐ भूर्भुवस्वरों भगवन्तं अन्तरिक्षं एतस्मिन्मण्डले आवाहयामि ॥

२२–आग्नेयकोणैकपदे दक्षिणप्रबाहौ वायुः–

वायुं हरिद्रसङ्काशं खड्गखेटलताङ्कुशम् ।
तुरङ्गवाहनं ध्यायेन्नानालङ्कारदीपितम् ॥

क्राणा शिशुरित्यस्य आप्त्यस्त्रित ऋषिः । उष्णिक्छन्दः । (पवमान सोमः) वायुर्देवता । वाय्वावाहने विनियोगः ॥

क्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् ।
विश्वा परिप्रिया भुवदध द्विता ॥

आवाहयामि देवेशं भूतानां देहधारिणम् ।
आगच्छ भगवन्वायो क्षेत्रेस्मिन्सन्निधौ भव ॥

ॐ भूर्भुवस्वरों भगवन्तं वायुं एतस्मिन्मण्डले आवाहयामि ॥

२३–तत्पश्चिमैकपदे दक्षिणमणिबन्धे पूषा–

पूषणमारुणमीक्षणयुग्मं खेटकखड्गवराभयहस्तम् ।
ध्यायतु रक्ततुरङ्गमवाहं भूषणदीधितिचारुशरीरम् ॥

पूषा त्वेत्यस्य यमपुत्रो देवश्रवा ऋषिः । त्रिष्टुब्छन्दः । पूषा देवता । पूषावाहने विनियोगः ॥

पू॒षा त्वे॒तश्च्या᳚वयतु॒ प्र वि॒द्वान॑नष्टपशु॒र्भुव॑नस्य गो॒पाः ।
स त्वै॒ तेभ्य॒ः परि॑ ददत्पि॒तृभ्यो॒ऽग्निर्दे॒वे॑भ्यः सुविदत्रि॒ये᳚भ्यः ॥

आवाहयामि देवेशं पद्महस्तञ्च पूषणम् ।
रक्तवस्त्रपरीधानं विद्युद्वर्णं महाबलम् ॥

ॐ भूर्भुवस्वरों भगवन्तं पूषणं एतस्मिन्मण्डले आवाहयामि ॥

२४–तत्पश्चिमद्विपदे दक्षिणपार्श्वे विपथः–

विपथं खेटकखड्गकृपाणान् कमलं दधतं चारु कराब्जैः ।
देवगणाधिपकार्मुककान्तिं ध्यायतु सिंहविरूढमुदग्रम् ॥

आपथय इत्यस्य आत्रेयः श्यावाश्व ऋषिः । अनुष्टुब्छन्दः । (मरुतः) विपथो देवता । विपथावाहने विनियोगः ॥

आप॑थयो॒ विप॑थ॒योऽन्त॑स्पथा॒ अनु॑पथाः ।
ए॒ते॒भिर्मह्यं॒ नाम॑भिर्य॒ज्ञं वि॑ष्टा॒र ओ᳚हते ॥

आवाहये तं विपथं पुराणं द्यावापृथिव्यन्तरचारिणञ्च ।
हस्तैर्दधानं कमलञ्च रक्तं गृहाण पूजां भगवन्नमस्ते ॥

ॐ भूर्भुवस्वरों भगवन्तं विपथं एतस्मिन्मण्डले आवाहयामि ॥
२५–तत्पश्चिमद्विपदे दक्षिणपार्श्वे गृहतक्षः–
खेटवराभयसोत्पलहस्तं बर्हिणवाहनमग्निसमाभम् ।
पिङ्गजठाभरमण्डलमौलिं नेत्रयुगं गृहतक्षकमीढे ॥
गृहं गृहमित्यस्य दीर्घतमसः कक्षीवानृषिः । त्रिष्टुब्छन्दः । (उषा)
गृहतक्षो देवता । गृहतक्षावाहने विनियोगः ॥
गृहं गृहमहना यात्यच्छा दिवे दिवे अधि नामा दधाना ।
सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनाम् ॥
आवाहयामि त्वां देव गृहतक्षसमाख्यकम् ।
पूजां गृहाण देवेश मम स्वस्तिकरो भव ॥
ॐ भूर्भुवस्वरों भगवन्तं गृहतक्षं एतस्मिन्मण्डले आवाहयामि ॥
२६–तत्पश्चिमद्विपदे दक्षिणोरौ यमः–
मेचकमाहिषपुङ्गवरूढं खेटकदण्डवराभयहस्तम् ।
अञ्जनसन्निभमुन्नतकायं सर्वविभूषणमन्तकमीढे ॥
यमाय मधुमत्तममित्यस्य यम ऋषिः । बृहती छन्दः । यमो देवता ।
यमावाहने विनियोगः ॥
यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥
आवाहयामि देवेशं दक्षिणं दिशमास्थितम् ।

महिषञ्च समारूढमञ्जनाद्रिसमप्रभम् ॥

ॐ भूर्भुवस्वरों भगवन्तं यमं एतस्मिन्मण्डले आवाहयामि ॥

२७–तत्पश्चिमद्विपदे दक्षिणजानुनि गन्धर्वः–

नमामि गन्धर्वमुदारकायं सखड्गखेटाङ्कुशपाशहस्तम् ।
विमानगं पङ्कजरागवर्णं हारादिनानाभरणं समीढे ॥

सोमो दददित्यस्य सूर्यासावित्री ऋषिः । अनुष्टुब्छन्दः । (सूर्यः) गन्धर्वो देवता । गन्धर्वावाहने विनियोगः ॥

सोमो ददद्गन्धर्वाय गन्धर्वो दददग्नये ।
रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥

आवाहयामि गन्धर्वं षट्त्रिंशद्रागतत्परम् ।
वीणां गृहीत्वा हस्तेन तद्वादनरतं विभुम् ॥

ॐ भूर्भुवस्वरों भगवन्तं गन्धर्वं एतस्मिन्मण्डले आवाहयामि ॥

२८–तत्पश्चिमद्विपदे दक्षिणजङ्घायां भृङ्गराजः–

भृङ्गराजमसिकान्तिसमाभं खड्गखेटगदाम्बुजहस्तम् ।
भृङ्गराजमधिरूढमुदारं सर्वभूषणभूषितकायम् ॥

त्वमग्ने राजेत्यस्य शौनको गृत्समद ऋषिः । जगती छन्दः । (अग्निः) भृङ्गराजो देवता । भृङ्गराजावाहने विनियोगः ॥

त्वमग्ने राजा वरुणो घृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः ।
त्वमर्यमा सत्पतिर्यस्य सं भुजं त्वमंशो विदथे देवभाजयुः ॥

आवाहयामि देवेशं भृङ्गराजं महाबलम् ।
षट्पदैः सेव्यमानञ्च कुसुमामोदसंयुतम् ॥
ॐ भूर्भुवस्वरों भगवन्तं भृङ्गराजं एतस्मिन्मण्डले आवाहयामि ॥
२९–तत्पश्चिमैकपदे दक्षिणस्फिचि मृगः–
स्मरतु कज्जलवारिदवर्णं मृगकुलाधिपसेव्यमुदग्रम् ।
सवरदाभयखेटकहस्तं सकलभूषणदीपितकायम् ॥
मृगो न भीम इत्यस्य ऐन्द्रो जय ऋषिः । त्रिष्टुब्छन्दः । (इन्द्रो) मृगो देवता । मृगावाहने विनियोगः ॥
मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताळ्हि वि मृधो नुदस्व ॥
मृगमावाहयिष्यामि शशाङ्ककृतचिह्नितम् ।
कृष्णवर्णं चतुष्पादं श्वेतोदरविषाणकम् ॥
ॐ भूर्भुवस्वरों भगवन्तं मृगं एतस्मिन्मण्डले आवाहयामि ॥
३०–नैऋत्यकोणैकपदे पादयोः पितरः–
ध्यायेत्पितॄन्खड्गखेटकमण्डलुकुशान्धृतान् ।
पिङ्गाक्षान्सोमपाद्यांश्च शुद्धान् श्वेतविभूषितान् ॥
आहं पितृनित्यस्य यमायनः शङ्ख ऋषिः । त्रिष्टुब्छन्दः । पितरो देवताः । पित्रावाहने विनियोगः ॥
आहं पितॄन्सुविदत्राँ अवित्सिनपातञ्च विक्रमणञ्च विष्णोः ।

बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥
पितॄनावाहयिष्यामि सोमपाद्याननुक्रमात् ।
पिङ्गाक्षान् कपिलान् शुद्धान् हस्ते कुशकमण्डलून् ॥
ॐ भूर्भुवस्वरों भगवतः पितॄन्  एतस्मिन्मण्डले आवाहयामि ॥
३१–तदुत्तरैकपदे वामस्फिचि दौवारिकः–
दौवारिकं सितनिभं खगराजरूढं नेत्रद्वयं परिघशूलवरेष्टहस्तम् ।
सन्दीप्तकुण्डललसद्वरदीप्तगण्डं ध्यायेन्महामुकुटदीपितदिक्तटान्तम् ॥
वेत्था हीत्यस्य बार्हस्पत्यो भारध्वाज ऋषिः । गायत्री छन्दः । (अग्निः) दौवारिको देवता । दौवारिकावाहने विनियोगः ॥
वेत्था हि वेधो अध्वनः पथश्च देवांजसा । अग्ने यज्ञेषु सुक्रतो ॥
एह्येहि दौवारिक रक्षणाय द्वाराणि सर्वाणि च मन्दिरस्य ।
पैष्टं बलिं वासितदन्तकाष्ठं गृहाण पूजां भगवन्नमस्ते ॥
ॐ भूर्भुवस्वरों भगवन्तं दौवारिकं एतस्मिन्मण्डले आवाहयामि ॥
३२–तदुत्तरद्विपदे वामजङ्घायां सुग्रीवः–
सुग्रीवं नीलवर्णाभं खड्गखेटपुटाञ्जलिम् ।
मयूरवाहनं ध्यायेन्नानालङ्कारशोभितम् ॥
ग्रीवाभ्यस्तेत्यस्य काश्यपो विवृहा ऋषिः । अनुष्टुब्छन्दः । (यक्ष्मघ्नः) सुग्रीवो देवता । सुग्रीवावाहने विनियोगः ॥
ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।

यक्ष्मं दोषण्य१मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥

आवाहये तं कपिमध्यमुख्यं सुग्रीवराजं नभमण्डलेस्मिन् ।

पाषाणवृक्षौ दधतं कराभ्यां गृहाण पूजां भगवन्नमस्ते ॥

ॐ भूर्भुवस्वरों भगवन्तं सुग्रीवं एतस्मिन्मण्डले आवाहयामि ॥

३३–तदुत्तरद्विपदे वामजानुनि पुष्पदन्तः–

पुष्पदन्तं दन्तिदन्तनिभं भ्रमरवाहनम् ।

खड्गखेटाञ्जलिकरं ध्यायेन्मकरकुण्डलम् ॥

आ तू नेत्यस्य काण्वः कुसीद ऋषिः । गायत्री छन्दः । (इन्द्रो)

पुष्पदन्तो देवता । पुष्पदन्तावाहने विनियोगः ॥

आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । महाहस्ती दक्षिणेन ॥

आवाहयामि देवेशं पुष्पदन्तं विनायकम् ।

लम्बोदरं महाकायं गजवक्त्रं चतुर्भुजम् ॥

ॐ भूर्भुवस्वरों भगवन्तं पुष्पदन्तं एतस्मिन्मण्डले आवाहयामि ॥

३४–तदुत्तरद्विपदे वामोरौ वरुणः–

वरुणं स्फटिकाभासं ध्यायेन्मकरवाहनम् ।

खड्गखेटकपाशाब्जहस्तं सर्वविभूषितम् ॥

ध्रुवासु त्वेत्यस्य वसिष्ठ ऋषिः । त्रिष्टुब्छन्दः । वरुणो देवता ।

वरुणावाहने विनियोगः ॥

ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्य१स्मत्पाशं वरुणो मुमोचत् ।

अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥
आवाहयामि देवेशं वरुणं जलनायकम् ।
मकराधिष्ठितं देवं श्वेताद्रिशिखरोपमम् ॥
ॐ भूर्भुवस्वरों भगवन्तं वरुणं एतस्मिन्मण्डले आवाहयामि ॥
३५–तदुत्तरद्विपदे वामपार्श्वे असुरः–
असुरं बद्बदाभासं ध्यायेद्व्याघ्रवराननम् ।
दंष्ट्राकरालवदनं खड्गखेटवराञ्जलिम् ॥
तमु ष्टुहीत्यस्य अत्रि ऋषिः । त्रिष्टुब्छन्दः । (रुद्रः) असुरो देवता ।
असुरावाहने विनियोगः ॥
तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य ।
यक्ष्वा महे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य ॥
असुर त्वमिहागच्छ रक्षोगणसमन्वित ।
हिरण्यपाशभृद्देव पूजां स्वीकुरु मे प्रभो ॥
ॐ भूर्भुवस्वरों भगवन्तं असुरं एतस्मिन्मण्डले आवाहयामि ॥
३६–तदुत्तरद्विपदे वामपार्श्वे शोषः–
शोषं नीलोत्पलप्रख्यं कृशाङ्गं प्रेतवाहनम् ।
खड्गखेटगदाचर्महस्तं ध्यायेन्महाबलम् ॥
अगस्त्यः खनमान इत्यस्य अगस्त्यशिष्यौ ऋषी । त्रिष्टुब्छन्दः । (रतिः)
शोषो देवता । शोषावाहने विनियोगः ॥

अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः ।

उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥

आवाहयामि देवेशं पातालतलवासिनम् ।

आगच्छ शोष भगवन् क्षेत्रेस्मिन्सन्निधौ भव ॥

ॐ भूर्भुवस्वरों भगवन्तं शोषं एतस्मिन्मण्डले आवाहयामि ॥

३७–तदुत्तरैकपदे वाममणिबन्धे पापयक्ष्मा–

खड्गखेटधरं पापयक्ष्माणं स्मर भीकरम् ।

निर्मांसं निर्घृणं शक्तिपाशपाणिं महाबलम् ॥

ये वध्वश्चन्द्रमित्यस्य सूर्यासावित्री ऋषिः । अनुष्टुब्छन्दः । (दम्पत्योः यक्ष्मनाशिनी) पापयक्ष्मा देवता । पापयक्ष्मावाहने विनियोगः ॥

ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनादनु ।

पुनस्तान्यज्ञिया देवा नयन्तु यत आगताः ॥

आवाहयामि तं पापं नाम्ना यक्ष्मेति विश्रुतम् ।

आगच्छ भगवन्पाप पूजां मे प्रतिगृह्यताम् ॥

ॐ भूर्भुवस्वरों भगवन्तं पापयक्ष्माणं एतस्मिन्मण्डले आवाहयामि ॥

३८–वायव्यकोणैकपदे वामप्रबाहौ रोगः–

कज्जलाचलसङ्काशं रोगं नेत्रद्वयान्वितम् ।

वराहवाहनं ध्यायेत्खड्गखेटवराभयम् ॥

उद्यन्नद्येत्यस्य प्रस्कण्व ऋषिः । अनुष्टुब्छन्दः । (सूर्यः) रोगो देवता ।

रोगावाहने विनियोगः ॥

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।

हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥

आवाहयामि तं रोगं वातादित्रिगुणात्मकम् ।

त्रिपादं त्रिशिरं रक्तनेत्रं भस्मविभूषितम् ॥

ॐ भूर्भुवस्वरों भगवन्तं रोगं एतस्मिन्मण्डले आवाहयामि ॥

३९–तत्पूर्वैकपदे वामप्रबाहौ नागः–

नागं कुन्देन्दुसङ्काशं ध्यायेत्सर्पवरासनम् ।

खड्गखेटकचापेषुकरं सर्पविभूषितम् ॥

धन्वना गा इत्यस्य भरध्वाजो पायु ऋषिः । त्रिष्टुब्छन्दः । (धनुः) नागो देवता । नागावाहने विनियोगः ॥

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।

धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥

आवाहये द्रुतं नागं फणासप्तकसंयुतम् ।

आगच्छोरगराज त्वं क्षेत्रेस्मिन्सन्निधौ भव ॥

ॐ भूर्भुवस्वरों भगवन्तं नागं एतस्मिन्मण्डले आवाहयामि ॥

४०–तत्पूर्वद्विपदे वामकूर्परे मुख्यः–

खड्गखेटकशङ्खारिकरं मुख्यं विचिन्तयेत् । गोक्षीरमौक्तिकाभासमुदारं गृध्रवाहनम् ॥

विश्वतश्चक्षुरित्यस्य भौवनः विश्वकर्मा ऋषिः । त्रिष्टुब्छन्दः । (विश्वकर्मा) मुख्यो देवता । मुख्यावाहने विनियोगः ॥

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतःस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥

आवाहयामि तं शैवगणानां मुख्यनायकम् ।
जटाजूटधरं सौम्यं शूलपट्टिशधारिणम् ॥

ॐ भूर्भुवस्वरों भगवन्तं मुख्यं एतस्मिन्मण्डले आवाहयामि ॥

४१–तत्पूर्वद्विपदे वामबाहौ भल्लाटः–

भल्लाटं पूर्णचन्द्राभं शुकश्वेतवराननम् ।
खड्गखेटकभल्लाब्जकरं ध्यायेन्मनोरमम् ॥

आ पक्थास इत्यस्य वसिष्ट ऋषिः । त्रिष्टुब्छन्दः । (इन्द्र) भल्लाटो देवता । भल्लाटावाहने विनियोगः ॥

आ पक्थासो भलानसो भनन्तालिनासो विषाणिनः शिवासः ।
आ योनयत्सधमा आर्यस्य गव्या तृत्सुभ्यो अजगन्युधा नृन् ॥

आवाहयामि देवेशं भल्लाटं शिवरूपिणम् ।
भिल्लवेषधरं कृष्णं धनुर्बाणासिधारिणम् ॥

ॐ भूर्भुवस्वरों भगवन्तं भल्लाटं एतस्मिन्मण्डले आवाहयामि ॥

४२–तत्पूर्वद्विपदे वामबाहौ सोमः–

सोमं सोमधरप्रख्यं खड्गखेटगदोत्पलम् ।

श्वेताश्ववाहनं ध्यायेन्नानाभूषणभूषितम् ॥

सोमो धेनुमित्यस्य गौतम ऋषिः । त्रिष्टुब्छन्दः । सोमो देवता ।
सोमावाहने विनियोगः ॥

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥

आवाहयामि देवेशं शशाङ्कं रजनीपतिम् ।
क्षीरोदधिसमुद्भूतं हरमौलिविराजितम् ॥

ॐ भूर्भुवस्वरों भगवन्तं सोमं एतस्मिन्मण्डले आवाहयामि ॥

४३–तत्पूर्वद्विपदे वामांसे अहिः–

रक्तोत्पलिनिभं ध्यायेदर्गलं कर्कटासनम् ।
खड्गखेटार्गळद्वन्द्वं धारयन्तं पदाम्बुजैः ॥

अहन्वृत्रमित्यस्य आङ्गिरसः हिरण्यस्तूप ऋषिः । त्रिष्टुब्छन्दः । (इन्द्रः)
अहिर्देवता । अह्यावाहने विनियोगः ॥

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥

अहिमावाहयिष्यामि त्रैलिक्यान्तरचारिणम् ।
नागेन्द्रकुलसम्भूतं चक्षुःकर्णमहीश्वरम् ॥

ॐ भूर्भुवस्वरों भगवन्तं अहिं एतस्मिन्मण्डले आवाहयामि ॥

४४–तत्पूर्वद्विपदे वामश्रोत्रे अदितिः–

अदितिं पिङ्गलाभासां तित्तिरीपक्षिवाहनाम् ।
खड्गखेटोत्पलद्वन्द्वकरां ध्यायेत्सुरप्रसूम् ॥
अदितिर्द्यौरित्यस्य गौतम ऋषिः । त्रिष्टुब्छन्दः । (विश्वेदेवाः)
अदितिर्देवता । अदित्यावाहने विनियोगः ॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥
आवाहयामि तां देवीमदितिं देवमातरम् ।
द्विभुजां पद्महस्ताञ्च सर्वाभरणभूषिताम् ॥
ॐ भूर्भुवस्वरों भगवतीं अदितिं एतस्मिन्मण्डले आवाहयामि ॥
४५–तत्पूर्वैकपदे वामनेत्रे दितिः–
मल्लिकामौक्तिकाभासां दितिं गृध्रवरासनाम् ।
खड्गखेटशुकाम्बोजकरां ध्यायेन्मनोरमाम् ॥
चित्तिमचित्तिमित्यस्य वामदेवऋषिः । त्रिष्टुब्छन्दः । (अग्निः) दितिर्देवता
। दित्यावाहने विनियोगः ॥
चित्तिमचित्तिं चिनवद्वि विद्वान् पृष्ठेव वीता वृजिना च मर्तान् ।
राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्य ॥
दितिमावाहयिष्यामि दैत्यानाञ्चैव मातरम् ।
शुक्लाङ्गीं द्विभुजाञ्चैव शूलपट्टिशधारिणीम् ॥
ॐ भूर्भुवस्वरों भगवतीं दितिं एतस्मिन्मण्डले आवाहयामि ॥

४६–मण्डलाद्बहिः पूर्वे स्कन्दः–

स्कन्दं नमामि शिरसा दरमल्लिकाभं दम्भोलिशक्तिलतिकान्वितखड्गहस्तम् ।
सञ्चिन्तयेद्भुजगभोजनपृष्ठपीठं नेत्रत्रयं सकलभूषणमेकवक्त्रम् ॥

कुमारं मातेत्यस्य आत्रेयः कुमार (जान वृशो वा) ऋषिः । त्रिष्टुब्छन्दः । (अग्निः) स्कन्धो देवता । स्कन्धावाहने विनियोगः ॥

कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे ।
अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥

आवाहयामि देवेशं षण्मुखं कृत्तिकासुतम् ।
रुद्रतेजःसमुत्पन्नं देवसेनासमन्वितम् ॥

ॐ भूर्भुवस्वरों भगवन्तं स्कन्दं आवाहयामि ॥

४७–दक्षिणे अर्यमा–

बालार्कबिम्बसदृशप्रभमश्ववाहं शक्तिं सखड्गशतकोटिलतां दधानम् ।
दोर्भिर्महद्भिरतुलैर्मणिकुण्डलादि भूषोज्वलत्करुणमार्यमणं नमामि ॥

त्वमर्यमा इत्यस्य आत्रेयो वसुश्रुत ऋषिः । त्रिष्टुब्छन्दः । (अग्निः) अर्यमा देवता । अर्यमावाहने विनियोगः ॥

त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन्गुह्यं बिभर्षि ।
अञ्जन्ति मित्रं सुधितं न गोभिर्यद्धम्पती समनसा कृणोषि ॥

अर्यमन्कुरु मे भद्रं सञ्ज्ञया सह सर्वदा ।
गृहाणेमां मया दत्तां पूजां देव नमोस्तु ते ॥

ॐ भूर्भुवस्वरों भगवन्तं अर्यमणं आवाहयामि ॥

४८–पश्चिमे जृम्भकः–

कौरण्डपुष्पसदृशद्युतिमब्जनेत्रं दोर्भिधृतं कुलिशशक्तिलतोग्रखड्गान् ।
सञ्चिन्तयेत्कमलपुङ्गवपृष्ठपीठं तं जृम्भकं सकलभूषणभूषिताङ्गम् ॥

अजीजनन्नित्यस्य विश्वामित्र ऋषिः । त्रिष्टुब्छन्दः । (अग्निः) जृम्भको देवता । जृम्भकावाहने विनियोगः ॥

अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीळुजंभम् ।
दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभि सं रभन्ते ॥

आवहयेत्तं प्रहरञ्च मुख्यं जृम्भायमाणं वरखड्गहस्तम् ।
प्रत्यग्दिशायाञ्च सुरक्षणीयमत्रैव वासं कुरु जृम्बकस्त्वम् ॥

ॐ भूर्भुवस्वरों भगवन्तं जृम्भकं आवाहयामि ॥

४९–उत्तरे पिलिपिञ्छः–

सजलनीरदनीलविभासितं भिदुरखेटकशक्तिलताकरम् ।
धवलकुञ्जरकन्धरसंस्थितं स्मरत डोरमुखं पिलिपिञ्छकम् ॥

यत्रा सुपर्णा इत्यस्य औचथ्यः दीर्घतमा ऋषिः । त्रिष्टुब्छन्दः । (विश्वेदेवाः) पिलिपिञ्छो देवता । पिलिपिञ्छावाहने विनियोगः ॥

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥

आवाहयेत्तं पिलिपिञ्चकञ्च मयूरपिच्छानि विधारयन्तम् ।

वामे तु हस्ते धनुरादधानं बाणं दधानं हस्तेन सव्ये ॥
ॐ भूर्भुवस्वरों भगवन्तं पिलिपिञ्चं आवाहयामि ॥
५०–ईशान्ये चरकी–
शङ्खमौक्तिकनिभां चरकीं तां प्रेतकन्धरगतां भुजाग्रैः ।
खड्गपानचषकेक्षुरिकाढ्यां कर्तरीं स्मरत भीषणवक्त्राम् ॥
घर्मेवेत्यस्य काश्यपो भूतांशु ऋषिः । त्रिष्टुब्छन्दः । (अश्विनौ) चरकी देवता । चरक्यावाहने विनियोगः ॥
घर्मेव मधु जठरे सनेरू भगेविता तुर्फरी फारिवारम् ।
पतरेव चचरा चन्द्रनिर्णिक्मन ऋङ्गा मनन्या३ न जग्मी ॥
अहमावहयिष्यामि चरकीं नाम राक्षसीम् ।
अङ्कुशं ढमरुं शङ्खं कुण्डलञ्चापि बिभ्रतीम् ॥
ॐ भूर्भुवस्वरों भगवतीं चरकीं आवाहयामि ॥
५१–आग्नेये विदारी–
संभावये तरुणहंससमानवर्णां खड्गञ्च पानचषकं क्षुरिकां कराब्जैः ।
सङ्कर्तरीपरिवृतां स्मरताद्विदारीं दंष्ट्राकरालवदनां सितकाकवाहाम् ॥
बृहन्तेवेत्यस्य काश्यपो भूतांशु ऋषिः । त्रिष्टुब्छन्दः । (अश्विनौ) विदारी देवता । विदार्यावाहने विनियोगः ॥
बृहन्तेव गम्भरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः ।
कर्णेव शासुरनु हि स्मराथोंऽशेव नो भजतं चित्रमप्नः ॥

आवाहयामि तां दैत्यां बिडालीसदृशाननाम् ।
विदारीं रोममांसाढ्यां पूजेयं प्रतिगृह्यताम् ॥
ॐ भूर्भुवस्वरों भगवतीं विदारीं आवाहयामि ॥
५२–नैऋत्ये पूतना–
पूतनां कनकपिङ्गलसन्निभां कर्तरीं क्षुरिकशोणितभाजने ।
धारिणीं स्मरतु भीषणखड्गकां धवलकुक्कुटपुङ्गववाहनाम् ॥
युविर्हीत्यस्य नार्मेधः शकपूत ऋषिः । प्रस्तारपङ्क्तिश्छन्दः ।
(मित्रावरुणौ) पूतना देवता । पूतनावाहने विनियोगः ॥
युवोर्हि मातादितिर्विचेतसा द्यौर्न भूमिः पयसा पुपूतनि ।
अव प्रिया दिदिष्टन सूरो निनिक्त रश्मिभिः ॥
पूतने त्वमिहागच्छ राक्षसीगणसंयुते ।
मया निवेदितां पूजां गृहाण वरदा भव ॥
ॐ भूर्भुवस्वरों भगवतीं पूतनां आवाहयामि ॥
५३–वायव्ये पापराक्षसी–
रक्ताननां धूम्रवस्त्रां राक्षसीगणसंयुताम् ।
खड्गखेटाभयवराञ्चिन्तयेत्पापराक्षसीम् ॥
पाहि न इन्द्रेत्यस्य दैवोदासिः परुच्छेप ऋषिः । अष्टिश्छन्दः । (इन्द्रः)
पापराक्षसी देवता । पापराक्षस्यावाहने विनियोगः ॥
पाहि न इन्द्र सुष्टुत स्रिधोवयाता सदमिद्दुर्मतीनां देवः सन्दुर्मतीनाम् ।

हन्ता पापस्य रक्षसस्त्राता विप्रस्य मावतः ।
अधा हि त्वा जनिता जीजनद्वसो रक्षोहणं त्वा जीजनद्वसो ॥
अहमावाहयिष्यामि राक्षसीं पापपूर्विकाम् ।
रक्ताननां धूम्रवस्त्रां राक्षसीगणसंयुताम् ॥
ॐ भूर्भुवस्वरों भगवतीं पापराक्षसीं आवाहयामि ॥
५४–तद्वहिः पूर्वे इन्द्रः–
इन्द्रमैरवतारूढं शच्या सह विराजितम् ।
वज्रपाणिं स्वर्णवर्णं ध्यायेत्स्वर्णविभूषितम् ॥
इन्द्र श्रेष्ठानीत्यस्य गृत्समद ऋषिः । त्रिष्टुब्छन्दः । इन्द्रो देवता ।
इन्द्रावाहने विनियोगः ॥
इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ।
पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्व मह्नाम् ॥
ॐ भूर्भुवस्वरों भगवन्तं इन्द्रं आवाहयामि ॥
५५–आग्नेय्यां अग्निः–
सप्तहस्तं सप्तजिह्वं षडक्षं मेषवाहनम् ।
स्वाहाप्रियं रक्तमग्निं ध्यायेत्स्रुक्स्रुवधारिणम् ॥
अग्निं दूतमित्यस्य काण्वो मेधातिथि ऋषिः । गायत्री छन्दः ।
अग्निर्देवता । अग्न्यावाहने विनियोगः ॥
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥

ॐ भूर्भुवस्वरों भगवन्तं अग्निं आवाहयामि ॥

५६– दक्षिणे यमः–

दण्डायुधं लोहिताक्षं यमं महिषवाहनम् ।

श्यामलासहितं कृष्णं ध्यायेदूर्ध्वं भयङ्करम् ॥

यमाय सोममित्यस्य यम ऋषिः । अनुष्टुब्छन्दः । यमो देवता ।

यमावाहने विनियोगः ॥

यमाय सोमं सुनुत यमाय जुहुता हविः ।

यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥

ॐ भूर्भुवस्वरों भगवन्तं यमं आवाहयामि ॥

५७– नैऋत्ये निऋतिः–

खड्गचर्मधरं नीलं निऋतिं नरवाहनम् ।

ऊर्ध्वकेशं विरूपाक्षं द्यायेद्रक्षोगणप्रभुम् ॥

मो षु ण इत्यस्य काण्वो अघोर ऋषिः । गायत्री छन्दः । (मरुतः)

निऋतिर्देवता । निऋत्यावाहने विनियोगः ॥

मो षु णः परा परा निऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ॥

ॐ भूर्भुवस्वरों भगवन्तं निऋतिं आवाहयामि ॥

५८– पश्चिमे वरुणः–

नागपाशधरं पीतं ध्यायेन्मकरवाहनम् ।

वरुणं तोयराशीशं रत्नाभरणभूषितम् ॥

तत्वा यामीत्यस्य अजीगर्तिः शुनःशेप ऋषिः । त्रिष्टुब्छन्दः । वरुणो देवता । वरुणावाहने विनियोगः ॥

तत्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।

अहेळमानो वरुणेह बोध्युरुशंस मान आयुः प्र मोषीः ॥

ॐ भूर्भुवस्वरों भगवन्तं वरुणं आवाहयामि ॥

५९– वायव्ये वायुः–

प्राणिनां प्राणभूतञ्चाङ्कुशहस्तं द्विबाहुकम् ।

वायुं कृष्णमृगासीनं चिन्तयेदञ्जनापतिम् ॥

तव वाय इत्यस्य आङ्गिरसो व्यश्व ऋषिः । गायत्री छन्दः । वायुर्देवता । वाय्वावाहने विनियोगः ॥

तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवांस्या वृणीमहे ॥

ॐ भूर्भुवस्वरों भगवन्तं वायुं आवाहयामि ॥

६०– उत्तरे सोमः–

अश्वासीनं गदापाणिं ध्यायेत्स्वर्णाभसन्निभम् ।

कुबेरं चित्रलेखेशं यक्षगन्धर्वनायकम् ॥

सोमो धेनुमित्यस्य गौतम ऋषिः । त्रिष्टुब्छन्दः । सोमो देवता । सोमावाहने विनियोगः ॥

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।

सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥

ॐ भूर्भुवस्वरों भगवन्तं सोमं आवाहयामि ॥

६१– ईशान्यां ईशानः–

पिनाकिनं वृषारूढं गौरीशं भूतनायकम् ।

श्वेतं ध्यायेच्चन्द्रमैलिं नागयज्ञोपवीतिनम् ॥

तमीशानमित्यस्य राहूगणो गौतम ऋषिः । जगती छन्दः । (विश्वेदेवाः) ईशानो देवता । ईशानावाहने विनियोगः ॥

तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् ।

पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥

ॐ भूर्भुवस्वरों भगवन्तं ईशानं आवाहयामि ॥

इत्यावाह्य, प्राणप्रतिष्ठापनं कृत्वा, उपचारपूजां कुर्यात् ।

ध्यान– आसीत्पूर्वं महादैत्यो वास्तुर्यज्ञापहारकः । स देवैर्बहुकालेन युद्धे जित्वा महीतले ॥ निपात्य बहुभिर्देवैर्निबद्धश्चतुरस्रकः । ईशान्ये मस्तको न्यस्तो नैऋत्ये पादसम्पुटम् ॥ जानुनी कूर्परी कृत्य बाहुयुग्मं तथैव च । वायव्याग्न्यां ततो न्यस्तं हृदये चाञ्जलिस्तथा ॥ पदीकृत्य च तस्योर्ध्वं स्वयमुक्ताः सुराः स्थिताः ॥

आवाहन– आगच्छ भगवन् देव तेजोराशे जगत्पते । क्रियमाणां मयापूजां गृहाण सुरसत्तम ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । आवाहयेयं भवतः पूजां गृह्णन्तु मत्कृतम् ॥

आसन– नानारत्नसमायुक्तं काञ्चनेन च भूषितम् । आसनं देवदेवेश प्रीत्यर्थं प्रतिगृह्यताम् ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः ।

आसनं दीयते दिव्यं पूजार्थमुपविश्यताम् ॥
पाद्य– पाद्यं गृहाण देवेश सर्वक्षेमसमर्थ भोः । भक्त्या समर्पितं देव वास्तुदेव नमोस्तु ते ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । पादप्रक्षालनायेदं पाद्यं वः प्रतिगृह्यताम् ॥
अर्घ्य– नमस्ते देवदेवेश नमस्ते सुरपूजित । नमस्ते जगदाधार अर्घ्यं नः प्रतिगृह्यताम् ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । इदमर्घ्यं भवत्प्रीत्यै हस्तमद्ये समर्पये ॥
आचमन– कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् । आचम्यतां जगन्नाथ मया दत्तं सुभक्तितः ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । आचम्यतां मुदायुक्तैर्भवद्भिरिदमुत्तमम् ॥
स्नान– गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः । स्नापितोसि मया देव त्वं नः शान्तिं कुरुष्व भोः ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । स्नपनार्थमिदं तोयं दत्तं वः प्रतिगृह्यताम् ॥
पञ्चामृत– स्नान पञ्चामृतैर्देव गृहाण परमेश्वर । अनाथनाथ सर्वज्ञ गीर्वाणाधिष्ठिताङ्गक ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । पञ्चामृतं मयानीतं युष्मभ्यमिदमर्पये ॥
गन्धोदक– कर्पूरैलासमायुक्तं सुगन्धिद्रव्यसंयुतम् । गन्धोदकं गृहस्वामिन् प्रीत्यर्थं प्रतिगृह्यताम् ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । गन्धोदकमिदं तोयं स्नानार्थं प्रतिगृह्यताम् ॥
वस्त्र– वास्तोष्पते नमस्तुभ्यं भूशय्या निरतः प्रभो । सर्ववर्णयुते देव वाससी प्रतिगृह्यताम् ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः ।

धौतञ्चैवोत्तरीयञ्च युषभ्यमिदमर्पये ॥
उपवीत– ब्रह्मादिसर्वदेवैश्च निर्मितं ब्रह्मसूत्रकम् । उपवीतप्रदानेन प्रीयतां वास्तुनायकः ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । उपवीतान् प्रदास्यामि भवद्भिर्धार्यतां शुभान् ॥
चन्दन– श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । गन्धेनाभ्यर्चये युष्मान् प्रसन्ना वरदाऽस्तु मे ॥
अक्षत– अक्षतास्तण्डुलाः शुभ्राः कुङ्कुमेन विलेपिताः । मया निवेदितो भक्त्या गृहाण गृहपूजित ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । तिलकालङ्कृतेर्हेतोरक्षतान्वः समर्पये ॥
पुष्प– मल्लिकादिसुगन्धीनि मालत्यादीनि वै प्रभो । मयाहृतानि पुष्पाणि वास्तुदेव गृहाण भोः ॥ ब्रह्मादयः सर्वदेवा वास्तुमण्डलसंस्थिताः । सुरभीणि प्रसूनानि मालाञ्च विनिवेदये ॥
धूपदीपौ दत्वा, पायसापूपमाषभक्ष्यादीनि निवेद्य, वास्तुहोमं कुर्यात् । स्वगृह्योक्तविधिना (रक्षोघ्नहोमादग्निमादाय) वरदनामाग्निं प्रतिष्ठाप्य अन्वादद्यात् ।
अत्रपधानं प्रधानदेवतां वास्तोष्पतिं वास्तोष्पते प्रतिजानीहीति मन्त्रचतुर्भिः वास्तोष्पते ध्रुवा स्थूणामिति च प्रतृचं १०८ (२८–८) वारं खधिरसमित् पायसाज्यत्रिमध्वक्तदूर्वाकृष्णतिलमिश्रव्रीहिद्रव्यैः, ब्रह्मादि त्रिपञ्चाशद्देवताः इन्द्रादि दिग्देवताश्च तत्तन्नाममन्त्रैरेकैकवारमाज्येन, पायसशेषेण स्विष्टकृतं–– ॥

वास्तुब्रह्मादीनां नाममन्त्राः– ॐ नमो भगवते वास्तुपुरुषाय स्वाहा ।
ब्रह्मणे । आर्यकाय । सवित्रे । विवस्वते । इन्द्राय । मित्राय । राजयक्ष्मणे
। भूधराय । आपवत्साय । अद्भ्यः । सावित्राय । इन्द्रजयाय ।
रुद्रजयाय । शिखिने । पर्जन्याय । जयन्ताय । कुलिशायुधाय । सूर्याय ।
सत्याय । भृशाय । अन्तरिक्षाय । वायवे । पूष्णे । विपथाय ।
गृहतक्षाय । यमाय । गन्धर्वाय । भृङ्गराजाय । मृगाय । पितृभ्यः ।
दौवारिकाय । सुग्रीवाय । पुष्पदन्ताय । वरुणाय । असुराय । शोषाय ।
पापयक्ष्मणे । रोगाय । नागाय । मुख्याय । भल्लाटाय । सोमाय ।
अहये । अदित्यै । दित्यै । स्कन्दाय । अर्यम्णे । जृम्भकाय ।
पिलिपिञ्चाय । चरक्यै । विदार्यै । पूतनायै । पापराक्षस्यै ॥
इन्द्राय । अग्नये । यमाय । निॠतये । वरुणाय । वायवे । सोमाय ।
ॐ नमो भगवते ईशानाय स्वाहा ॥
प्रधानहोमानन्तरे अन्यस्मिन् श्वेतमृद्भिर्विरचितमण्डले,
वास्तुपुरुषाकृतिमण्डले वा दर्भास्तरणं कृत्वा, तत्तत्स्थानेषु
वास्तुब्रह्मादिदेवताभ्यः (सदीप) तत्तदुक्त द्रव्यैः, कदली कूष्माण्ड
मधुरत्रय मिश्रितहरिद्रान्नलाजैर्वा बलिहरणं कुर्यात् ।
(पिष्टपात्रस्थितैर्दीपैर्देवतानां बलिं हरेत् । द्रव्याभावे पायसेन बलिदानं
समाचरेत् ॥)

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | | | | |
| | मृष्टान्न | | | | | मृष्टान्न | | | | | मृष्टान्न | |
| | | कृसर | कृसर | कृसर | कृसर | कृसर | कृसर | कृसर | कृसर | गुडान्न | | |
| | | दध्यन्न | माषान्न | | | | | | माषान्न | गुडान्न | | |
| | | दध्यन्न | | माषान्न | पायसान्न | | | माषान्न | गुडान्न | | | |
| | | दध्यन्न | | | | | | | गुडान्न | | | |
| | मृष्टान्न | दध्यन्न | | पाय–सान्न | पायसान्न | | | पाय–सान्न | गुडान्न | | मृष्टान्न | |
| | | दध्यन्न | | | | | | | गुडान्न | | | |
| | | दध्यन्न | | माषान्न | पायसान्न | | | माषान्न | गुडान्न | | | |
| | | दध्यन्न | माषान्न | घृतान्न | घृतान्न | घृतान्न | घृतान्न | घृतान्न | माषान्न | गुडान्न | | |
| | | दध्यन्न | घृतान्न | | | | | | घृतान्न | घृतान्न | | |
| | मृष्टान्न | | | | | मृष्टान्न | | | | | मृष्टान्न | |
| | | | | | | | | | | | | |

हरिद्रान्नं तिलैर्मिश्रं कूष्माण्डदधिमिश्रितम् । घृतक्षीरमधुयुतं रम्भाशकलसंयुतम् ॥ पायसोदनलाजैश्च युक्तं धूपं प्रसूनकैः । नानापक्वान्नसंयुक्तं नानागन्धसमन्वितम् ॥ बलिं गृहाण देवेश वास्तुदोषप्रणाशक ॥ ॐ नमो भगवते वास्तोष्पतये स्वाहा ।
हे वास्तोष्पते इमं बलिं गृहाण गृहाण । गृहं रक्ष रक्ष । इह स्थाने स्थिरीकुरु स्थिरीकुरु ॥
पायसौदनलाजैश्च युक्तं धूपैः प्रसूनकैः । अक्षतं तिलसंयुक्तं माषभक्तादिमण्डितम् ॥ गृहणेमं बलिं ब्रह्मन् वास्तुदोषं प्रणाशय ॥ हे

ब्रह्मा -- स्थिरीकुरु ॥

गन्धादिशर्करापूपं पायसोपरिसंस्थितम् । आर्यकाख्य गृहाणेमं सर्वदोषान् प्रणाशय ॥ हे आर्यक --॥

शर्कराघृतसंयुक्तं रक्तगन्धादिभिर्युतम् । गृहाणेमं बलिं हृद्यं सवित्रे ते नमोस्तु ते ॥ हे सविता --॥

चन्दाद्यर्चितं नाथ कर्पूरागरुमण्डितम् । विवस्वान्वै गृहाणेमं सर्वदोषान् प्रणाशय ॥ हे विवस्वान् --॥

हरिद्वर्णोदनं चैव घ्रुतयुक्तञ्च पायसम् । बलिमिन्द्र गृहाण त्वं रक्षोविघ्नं प्रणाशय ॥ हे इन्द्र --॥

सगुडं पायसं चाथ कुसुमादिसमन्वितम् । गृहाणेमं बलिं हृद्यं मित्र शान्तिं प्रयच्छ मे ॥ हे मित्र --॥

आज्यपक्वं मांसयुक्तं पायसं कुसुमान्वितम् । गृहाणेमं बलिं हृद्यं राजयक्ष्मा नमोस्तु ते ॥ हे राजयक्ष्मा --॥

माषौदनं समांसञ्च गन्धाढ्यं क्षीरमिश्रितम् । भूधरेमं गृहाणत्वं सर्वदोषान् प्रणाशय ॥ हे भूधर --॥

दध्योदनं गुडैर्मिश्रं गन्धाद्यैश्च सुमण्डितम् । आपवत्स गृहाणेदं बलिं विघ्नं प्रणाशय ॥ हे आपवत्स --॥

क्षीरखण्ढसमायुक्तं पुष्पाद्यैश्च सुशोभितम् । गृहाण बलिमापस्त्वमतः शान्तिं प्रयच्छ मे ॥ ॐ नमो भगवत्योः अद्ब्यः स्वाहा । हे अपः इमं बलिं गृह्णीत गृह्णीत, गृहं रक्षत रक्षत, इह स्थाने स्थिरीकुरुत स्थिरीकुरुत ॥

पुष्पादि लड्डुपानीयं कर्पूरागरुवासितम् । सावित्र वै गृहाणेदं शान्तिमत्र प्रयच्छ मे ॥ हे सावित्र --॥

सुवर्णपिष्टकं चाथ वस्त्रगन्धादिभिर्युतम् । घृतान्वितं गृहाणेन्द्रजय देव नमोस्तु ते ॥ हे इन्द्रजय --॥

पायसं गुडसम्मिश्रं वस्त्रपुष्पादिसंयुतम् । गृहाणेमं बलिं रुद्रजय देव नमोस्तु ते ॥ हे रुद्रजय --॥

सघृतं साक्षतान्नं च वस्त्रगन्धाद्यलङ्कृतम् । गृहाणेमं बलिं हृद्यं शिखी देव नमोस्तु ते ॥ हे शिखी --॥

सोत्पलं तण्डुलं पक्वं दधिसंयुक्तमेव च । बलिं गृहाण पर्जन्य विघ्नमत्र प्रणाशय ॥ हे पर्जन्य --॥

बिल्वपिष्टं कुङ्कुमाक्तमोदनं घृतसंयुतम् । गृहाणेमं बलिं हृद्यं जयन्ताय नमोस्तु ते ॥ हे जयन्त --॥

शीतमन्नं तथा पुष्पकुङ्कुमादिसमन्वितम् । गृहाणेमं बलिं हृद्यं शक्र देव नमोस्तु ते ॥ हे कुलिशायुध --॥

चित्रान्नं सगुडञ्चाथ रक्तगन्धादिशोभितम् । गृहाणेदं बलिं सूर्य विघ्नमत्र प्रणाशय ॥ हे सूर्य --॥

वितानं धूम्रवर्णाभमपूपं सुमनोहरम् । रक्तयुक्तं गृहाणेमं बलिं सत्य नमोस्तु ते ॥ हे सत्य --॥

इदं घृतान्नसंयुक्तं वस्त्रगन्धादिपूजितम् । गृहाणेमं भृश बलिं वास्तुदोषं प्रणाशय ॥ हे भृश --॥

शष्कुलिं पायसैर्युक्तं वस्त्राकरसमन्वितम् । गृहाणेमं बलिं शुभ्रं

अन्तरिक्ष नमोस्तु ते ॥ हे अन्तरिक्ष --॥

सघृतं सक्तुकञ्चैव स्वन्नाद्यैरुपशोभितम् । गृहाणेमं बलिं हृद्यं वायु देव नमोस्तु ते ॥ हे वायु --॥

क्षीरलाजसमायुक्तं रक्तपुष्पादिमण्डितम् । गृहाणेमं बलिं हृद्यं पूषन् देव नमोस्तु ते ॥ हे पूषा --॥

चणकोदनगन्धादिपीतपुष्पसमन्वितम् । बलिं विपथ गृह्णेमं विघ्नमत्र प्रणाशय ॥ हे विपथ --॥

दध्योदनं वस्त्रयुतं नवनीतादि मण्डितम् । प्रीतिप्रदं गृहाणेदं गृहतक्ष नमोस्तु ते ॥ हे गृहतक्ष --॥

पक्वमांसोदनञ्चैव रक्तवस्त्रादि मण्डितम् । गृहाणेमं बलिं हृद्यं यम देव नमोस्तु ते ॥ हे यम --॥

मध्वोदनसमायुक्तं रक्तपुष्पादिभिर्युतम् । बलिं गृहाण गन्धर्व सर्वदोषान् प्रणाशय ॥ हे गन्धर्व --॥

इमान्तु मैषिकीं जिह्वां मांसभक्तोपरिस्थिताम् । गृहाणेमं बलिं भृङ्गराज शान्तिं कुरुष्व मे ॥ हे भृङ्गराज --॥

घृतमिश्रं यावकञ्च गन्धपुष्पादिसंयुतम् । गृहाणेमं बलिं हृद्यं मृग देव नमोस्तु ते ॥ हे मृग --॥

कृसरं माषसंयुक्तं मधुसर्पिःसमन्वितम् । बलिं गृह्णन्तु पितरः सर्वदोषप्रशान्तये ॥ ॐ नमो भगवतः पितृभ्यः स्वाहा । हे पितरः इमं बलिं गृह्णीत गृह्णीत, गृहं रक्षत रक्षत, इह स्थाने स्थिरीकुरुत स्थिरीकुरुत ॥

चन्दनागरुकाष्ठञ्च पैष्टं कृष्णबलिं तथा । गृहाणेमं महाह्वद्यं दौवारिक नमोस्तु ते ॥ हे दौवारिक --॥

अपूपं पायसञ्चाथ गन्धपुष्पादिमिश्रितम् । सुग्रीव वै गृहाणेमं बलिं शान्तिं प्रयच्छ मे ॥ हे सुग्रीव --॥

माषभक्तं कुशस्तम्भं घृतपायससंयुतम् । पुष्पदन्त गृहाणेमं वास्तुदोषं प्रणाशय ॥ हे पुष्पदन्त --॥

कुशस्तम्भेन संयुक्तमुद्यत्पद्मञ्च वारुणम् । गृहाणेमं बलिं देव जलराज नमोस्तु ते ॥ हे वरुण --॥

यवाग्राणि च गोदुग्धं हेमपुष्पं सुरान्वितम् । प्रीतो बलिं गृहाणेमं असुराय नमोस्तु ते ॥ हे असुर --॥

ओदनं घृतसंयुक्तं कर्पूरादि समन्वितम् । गृहाणेमं बलिं शोष सर्वशान्तिं प्रयच्छ मे ॥ हे शोष --॥

यवचूर्णेन संयुक्तं रक्तगन्धादि मण्डितम् । गृहाणेमं बलिं पापयक्ष्मा विघ्नं प्रणाशय ॥ हे पापयक्ष्मा --॥

लड्डुकं घृतसंयुक्तं गन्धपुष्पादिशोभितम् । गृहाणेमं बलिं रोग सर्वरोगान् प्रणाशय ॥ हे रोग --॥

फलमोदनपुष्पञ्च नागकेसरसंयुतम् । नागदेव गृहाणेदं विघ्नमत्र प्रणाशय ॥ हे नाग --॥

मुद्गोदनं नारिकेलोदकं वस्त्रादिसंयुतम् । गृहाणेमं बलिं मुख्य वास्तुदोषं प्रणाशय ॥ हे मुख्य --॥

पानकं मधुनामिश्रं मुद्गमोदनसंयुतम् । भल्लाटेदं गृहाण त्वं कल्याणं

कुरु सर्वदा ॥ हे भल्लाट --॥
गोक्षीरेण समायुक्तं मधुसर्पिःसमन्वितम् । गृहाणेदं बलिं सोम सर्वदोषान्प्रणाशय ॥ हे सोम --॥
सघृतं शालिपिष्ठञ्च पायसेन सुमिश्रितम् । गृहाणेदं बलिं सर्प फणिराज नमोस्तु ते ॥ हे अहि --॥
पोलिकां मधुसम्मिश्रं वस्त्रगन्धादिसंयुतम् । गृहाणेमं बलिं हृद्यं देवमातर्नमोस्तु ते ॥ हे अदिति --॥
क्षीरखण्डसमायुक्तां पूरिकां घृतपाचिताम् । दैत्यमातर्गृहाणेदं सर्वदोषान्प्रणाशय ॥ हे दिति --॥
क्षीरान्नं पूरिकायुक्तं माषान्नोपरिसंस्थितम् । गृहाणेमं बलिं स्कन्द वास्तुदोषं प्रणाशय ॥ हे स्कन्द --॥
अपूपान्मधुदूर्वाक्तान् कृसरान्नेन पूरितान् । अर्यमा त्वं गृहाणेमं रक्षोविघ्नं प्रणाशय ॥ हे अर्यमा --॥
मांसोत्पलोदनं मत्स्यं गन्धधूपसमन्वितम् । जृम्भक त्वं गृहाणेदं रक्षोविघ्नं प्रणाशय ॥ हे जृम्भक --॥
छागकर्णान्वितं मांसं वस्त्रगन्धादिसंयुतम् । पिलिपिञ्च गृहाणेमं रक्षोविघ्नं प्रणाशय ॥ हे पिलिपिञ्च --॥
घृतेन साधितं मांसं रुधिरादिसवस्त्रकम् । चरकी त्वं गृहाणेमं रक्षोविघ्नं प्रणाशय ॥ हे चरकी --॥
रक्तपुष्पं समांसं वै रक्तगन्धादिसंयुतम् । विदारिके गृहाणेदं रक्षोविघ्नं प्रणाशय ॥ हे विदारी --॥

पीतरक्तान्नमाषञ्च तिलतैलसमन्वितम् । पूतने त्वं गृहाणेदं रक्षोविघ्नं प्रणाशय ॥ हे पूतना --॥

सघृतं पोलिकाञ्चैव मत्स्यमांसं सुरासवम् । गृहाणेमं बलिं पापराक्षसि त्वं नमोस्तु ते ॥ हे पापराक्षसी --॥

ततो वास्तुब्रह्मादि देवताभ्यः प्रत्येकताम्बूलदक्षिणानि दत्वा, स्विष्टकृदादि होमशेषं समाप्य, पूर्णाहुतिं हुत्वा, मङ्गलनीराजनञ्च कृत्वा, प्रसन्नार्घ्यं दत्वा प्रार्थयेत् ।

अर्घ्यमन्त्र- यज्ञभागं प्रतीक्षस्व पूजाञ्चैव बलिं मम ।
नमो नमस्ते देवेश मम स्वस्तिकरो भव ॥
पूज्योसि त्रिषु लोकेषु यज्ञरक्षार्थहेतवे ।
त्वद्विना न च सिध्यन्ति यज्ञदानान्यनेकशः ॥
अयोने भगवन् भर्ग ललाटस्वेदसम्भव ।
गृहाणार्घ्यं मयादत्तं वास्तो स्वामिन्नमोस्तु ते ॥
नमस्ते वास्तु देवेश सर्वदोषं प्रणाशय ।
शान्तिं कुरु सुखं देहि सर्वान्कामान् प्रयच्छ मे ॥
ब्रह्मादित्रिपञ्चाशद्देवताधिष्ठितवास्तोष्पते इदमर्घ्यमिदमर्घ्यमिदमर्घ्यम् ॥

प्रार्थना-
आसित्पुरासकललोकभयङ्करात्मा क्रूरासुरो भुजबलादतिगर्वितश्च ।
क्षोणीतले विनिहतो विजितः प्रशान्तो देवैः स वास्तुपुरुषश्चतुरस्रसंस्थः ॥
वास्तुरूप नमस्तेस्तु भूशय्यानिरतः प्रभो ।
मद्गृहं धनधान्यैश्च समृद्धं कुरु सर्वदा ॥

दैविकं मानुषं यद्यत्साध्वसं समुपस्थितम् ।
अनुपद्य च तत्सर्वं त्वं नः शान्तिं कुरु प्रभो ॥
भयं प्रवर्तते यद्यद्द्विपदाञ्च चतुष्पदाम् ।
रक्षोभूतपिशाचेभ्यः तन्नुदस्व ददस्व शम् ॥
राजारि तस्कराग्न्यम्बु शस्त्र शृङ्गिविषादिभिः ।
भयं यद्यत्समायाति तन्नुदस्व ददस्व शम् ॥
मारी मसूरिका राजयक्ष्मादिभ्यो महद्भयम् ।
कदाचिन्नप्रभाधेत श्रीः सन्तिष्ठतु मद्गृहे ॥
कदाचित्क्लहोऽलक्ष्मीरनृतं पौरुषन्त्वघम् ।
गृहे मे न प्रवर्तेत विजयः श्रीश्च तिष्ठतु ॥
शान्तिं तुष्ठिञ्च पुष्ठिञ्च वृद्धिमायुर्यशः श्रियम् ।
धनधान्यसुखारोग्यं ददस्व सततं मम ॥
नियन्ता जगतो ब्रह्मा वास्तुमध्ये सुसंस्थितः ।
ददातु सुखमारोग्यं धनं धान्यं यशः श्रियम् ॥
वसन्तु मद्गृहे नित्यमार्याद्या वास्तुदेवताः ।
ते सर्वे वरदाः प्रीताः शं कुर्वन्तु सदा मम ॥
जय वास्तोष्पते तुभ्यं जय क्रव्यादनायक ।
जय त्रिपञ्चाशद्गीर्वाणाधिष्ठान भयङ्कर ॥
जय भूपृष्ठशयन जटापटलभीषण ।
ऐश्वर्यं सन्ततिं दत्वा स्थिरीकुरु गृहे मम ॥
ततोग्नेरुत्तरपूजां कृत्वा, गृहाद्बहिः हरिद्रान्न (पायसान्न माषभक्ष्य)

कूष्माण्ड क्षारोदक मधुरनालिकेर दीपसहित लाजैः दिग्देवताबलिदानं कुर्यात् ।

पूर्वे– इन्द्रः सुरपतिश्चैव वज्रहस्तो महाबलः ।
शतयागाधिपो देवस्तस्मै नित्यं नमो नमः ॥

ॐ लं इन्द्राय नमः । आसनमिदं । स्वागतं । भगवन्तं सहस्राक्षं ऐरावतसंस्थितं पीतकिरीटिनं कुण्डलधरं दक्षिणवामकरस्थवज्रोत्पलं शचीसहितं सपरिवारमिन्द्रं आवाहयामि । अर्घ्यपाद्याद्युपचारान् समर्पयामि । गन्धाक्षतपुष्पाणि समर्पयामि । धूपमाघ्रापयामि । दीपं दर्शयामि । ॐ नमो भगवते इन्द्राय स्वाहा । भो इन्द्र, इमं बलिं गृहाण । गृहाण । गृहं रक्ष । रक्ष । इह स्थाने स्थिरीकुरु । स्थिरीकुरु । ममायुः कर्ता, शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता कल्याणकर्ता वरदो भव । अनेन बलिदानेन भगवानिन्द्रः प्रीयताम् ॥

आग्नेये– आग्नेयः पुरुषो रक्तः सर्वदेवमयोव्ययः ।
धूम्रकेतुरजोध्यक्षस्तस्मै नित्यं नमो नमः ॥

ॐ रं अग्नये नमः । भगवन्तं छागस्थं रक्तवर्णं दक्षिणवामकरद्वयधृत शक्तिकमण्डलुं यज्ञोपवीतिनं स्वाहासहितं सपरिवारमग्निमावाहयामि । अर्घ्यपा –– । ॐ नमो भगवते अग्नये स्वाहा । भो अग्ने, –– अनेन बलिदानेन भगवानग्निः प्रीयताम् ॥

याम्ये– महामहिषमारूढं दण्डहस्तं महाबलम् ।
आवाहयामि क्षेत्रेस्मिन् पूजेयं प्रतिगृह्यताम् ॥

ॐ मं यमाय नमः । भगवन्तं महिषारूडं

दृतदण्डपाशहस्तदक्षिणवामकरद्वयं कृष्णाञ्जनचयोपमं अग्निसमलोचनं इलासहितं सपरिवारं यममावाहयामि । अर्घ्यपा -- । ॐ नमो भगवते यमाय स्वाहा । भो यम, -- अनेन बलिदानेन भगवान् यमः प्रीयताम् ॥

नैऋत्यां- निऋतिं खड्गहस्तञ्च सर्वलोकैकपावनम् ।
आवाहयामि क्षेत्रेस्मिन् पूजेयं प्रतिगृह्यताम् ॥

ॐ क्षं निऋतये नमः । भगवन्तं नरारूडं खड्गहस्तं राक्षसैर्वेष्टितं नीलाम्बरभूषितं कालिकासहितं सपरिवारं निऋतिमावाहयामि । अर्घ्यपा -- । ॐ नमो भगवते निऋतये स्वाहा । भो निऋति, -- अनेन बलिदानेन भगवान्निऋतिः प्रीयताम् ॥

निऋतिपश्चिममध्ये-योसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ।
पुष्पवद्वाहयन्मूर्ध्नि तस्मै नित्यं नमो नमः ॥

ॐ षं शेषाय नमः । भगवन्तं अनन्तशयनमासीनं फणासप्तकमण्डितं पद्मशङ्खचक्रगदाधरं चतुर्बाहुं नीलवर्णं सौपर्णीसहितं सपरिवारमनन्तमावाहयामि । अर्घ्यपा -- । ॐ नमो भगवते अनन्ताय स्वाहा । भो अनन्त, -- अनेन बलिदानेन भगवाननन्तः प्रीयताम् ॥

पश्चिमे- पाशहस्तञ्च वरुणमर्णसां पतिमीश्वरम् ।
आवाहयामि क्षेत्रेस्मिन् पूजेयं प्रतिगृह्यताम् ॥

ॐ वं वरुणाय नमः । भगवन्तं मकरस्थं पाशहस्तं शुक्लवर्णं किरीटधारिणं वारुणीसहितं सपरिवारं वरुणमावाहयामि । अर्घ्यपा -- । ॐ नमो भगवते वरुणाय स्वाहा । भो वरुण, -- अनेन बलिदानेन

भगवान् वरुणः प्रीयताम् ॥
वायव्ये– वायुमाकाशगञ्चैव पवनं वेगवद्गतिम् ।
आवाहयामि क्षेत्रेस्मिन् पूजेयं प्रतिगृह्यताम् ॥
ॐ यं वायवे नमः । भगवन्तं मृगाधिरूडं धूम्रवर्णं चित्राम्बरधरं युवानं अङ्कुशध्वजधरदक्षिणवामहस्तं अञ्जनासहितं सपरिवारं वायुमावाहयामि । अर्घ्यपा –– । ॐ नमो भगवते वायवे स्वाहा । भो वायो, अनेन बलिदानेन भगवान्वायुः प्रीयताम् ॥
उत्तरे– सर्वनक्षत्रमध्येतु सोमो राजा व्यवस्थितः ।
तस्मै सोमाय देवाय नक्षत्रपतये नमः ॥
ॐ सं सोमाय नमः । भगवन्तं नरयुतविमानस्थं कुण्डलहारकेयूर रुचिरवरगदाधरं मुकुटिनं महोदरं महाकायं हरितवर्णं चित्रलेखासहितं सपरिवारं कुबेरमावाहयामि । अर्घ्यपा –– । ॐ नमो भगवते सोमाय स्वाहा । भो सोम, –– अनेन बलिदानेन भगवान्सोमः प्रीयताम् ॥
ईशान्ये– वृषस्कन्धसमारूडं शूलहस्तं त्रिलोचनम् ।
आवाहयामि क्षेत्रेस्मिन् पूजेयं प्रतिगृह्यताम् ॥
ॐ हं ईशानाय नमः । भगवन्तं वृषारूडं दक्षिणवामहस्तयोः वरत्रिशूलधरं त्रिनेत्रं शुक्लवर्णमुमासहितं सपरिवारमीशानमावाहयामि । अर्घ्यपा –– । ॐ नमो भगवते ईशानाय स्वाहा । भो ईशान, –– अनेन बलिदानेन भगवानीशानः प्रीयताम् ॥
ईशानपूर्वयोर्मध्ये– पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पितामहः ।
यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमो नमः ॥

ॐ जां ब्रह्मणे नमः । भगवन्तं अक्षसूत्रकुशमुष्ठिधरोर्ध्वाधोदक्षिणकरं स्रुवकमण्डलुधरोर्ध्वाधोवामकरं चतुर्मुखं श्मश्रुजटिलं लम्बोधरं रक्तवर्णं वाणीसहितं सपरिवारं ब्रह्माणमावाहयामि । अर्घ्यपा –– । ॐ नमो भगवते ब्रह्मणे स्वाहा । भो ब्रह्म, –– अनेन बलिदानेन भगवान्ब्रह्मा प्रीयताम् ॥

पुनः ईशान्ये– कम्बुग्रीवं बृहत्कं परशुधरमजं तुङ्गनासं त्रिनेत्रं
कापालं खड्गहस्तं कणकणनिनदं घण्टनादं कपर्दम् ।
उग्रं व्यग्राट्टहासं भयकरमभयं बद्दनागेन्द्रकेशं
बालं बालेन्दुमौलिं विकृतमविकृतं क्षेत्रपालं स्मरामि ॥

ॐ क्षं क्षेत्रपालाय नमः । भगवन्तं शूलहस्तं वृषभारूढं श्वानगणपरिवृतं भूतपतिं सपरिवारं क्षेत्रेपालमावाहयामि । अर्घ्यपा –– । ॐ नमो भगवते क्षेत्रपालाय स्वाहा । भो क्षेत्रपाल, –– अनेन बलिदानेन भगवान्क्षेत्रपालः प्रीयताम् ॥

ततः– स्वर्गपातालमर्त्येषु ये देवा वास्तुसम्भवाः ।
गृह्णन्त्विमं बलिं हृद्यं तुष्टा यान्तु स्वमन्दिरम् ॥
मातरो भूतवेताला ये चान्ये बलिकांक्षिणः ।
वास्तोः परिषदा ये च तेऽपि गृह्णन्त्विमं बलिम् ॥
पितरः क्षेत्रपालाश्च ये चान्ये भैरवादयः ।
ते सर्वे तृप्तिमायान्तु वास्तुदोषः प्रणश्यतु ॥
सर्वेभ्यः वास्तुपार्षदेभ्यः स्वाहा । इमं बलिं गृह्णीत । गृहं रक्षत ॥
इति लाजान् विकिरेत् । ततः हस्तपादौ प्रक्षाल्य, आचमेत् ॥

ततो ऋत्विजः सपत्नीकं यजमानं गृहञ्च कलशोदकैः, वस्तोष्पते प्रति, यदन्ति यच्च, आपोहिष्ठा, शन्न इन्द्राग्नीत्यादिभिः मार्जयेत् । ततो यजमानः ब्राह्मणेभ्यः स्वस्त्रकलश (ब्रह्मादिप्रतिमा) फलाज्य गोदानानि कृत्वा, यथाशक्तिब्राह्मणान् भोजयित्वा, वास्तोरुत्तरपूजां (गृहप्रवेशनपश्चाद्वा) कृत्वा, क्षमायाचनं कुर्यात् ।

प्रार्थयामीत्यहं देव शालाया अधिपस्तु यः ।
प्रायश्चित्तप्रसङ्गेन गृहार्थे यन्मया कृतम् ॥
मूलच्छेदं तृणच्छेदं कृमिकीटनिपातनम् ।
हननं जलजीवानां भूमौ शस्त्रेण घातनम् ॥
अनृतं भाषितं यच्च किञ्चिद्वृक्षस्य पातनम् ।
एतत्सर्वं क्षमस्वैनो यन्मया दुष्कृतं कृतम् ॥
गृहार्थे यत्कृतं पापमज्ञानेनापि चेतसा ।
तत्सर्वं क्षम्यतां देव गृहशालां शुभां कुरु ॥
यावच्चन्द्रो नगाः सूर्यस्तिष्ठन्ति प्रतिपादिताः ।
तावत्त्वयात्र देवेश स्थेयं भक्तानुकम्पया ॥
भगवन्देव देवेश त्वं पिता सर्वदेहिनाम् ।
यज्ञरूपेण भगवंस्त्वया व्याप्तं चराचरम् ॥
जानताजानतावापि शास्त्रोक्तं न कृतं हि यत् ।
तच्च सम्पूर्णमेवास्तु प्रसन्न वरदो भव ॥
यथा त्वं धरणीं कृत्स्नां सर्वदा धरसि प्रभो ।
हिताय सर्वलिकानां तथा धारय मद्गृहम् ॥

इष्टान्कामान्प्रयच्छ त्वं दुरितञ्च विनाशय ।
पुत्रपौत्रादिवृद्धिञ्च सततं कुरु देव नः ॥

ततो यजमानः कर्म कृष्णार्पणं कृत्वा, शिवं वास्तु । शिवं वास्तु । शिवं वास्त्विति भवन्तो भ्रुवन्तु । इति ब्राह्मणान् प्रार्थयेत् । ते च ब्राह्मणाः– शिवं वास्तु । शिवं वास्तु । शिवं वास्तु ॥ इति मन्द्रमध्योच्छस्वरैः भ्रूयुः । एवमेव– स्थिरं वास्तु । शुभं वास्त्विति वाचयित्वा,

वास्तुप्रतिमा (स्तम्भ) स्थापनम्–(ततः गृहस्यैशान्यभागे हस्तमात्रं गर्तं अगस्त्यः खनमानः इति खात्वा, तत्र दध्योदनदूर्वान्निक्षिप्य, तत्र (अधोमुखं) वास्तुप्रतिमां स्तम्भं वा तदस्तु मित्रावरुणा इति प्रतिष्ठाप्य, गर्तं मृदा पूरयित्वा, प्रार्थयेत् ।

पूजितोसि मया वास्तो होमाद्यैरर्चनैः शुभैः ।
प्रसीद पाहि विश्वेश देहि मे गृहजं सुखम् ॥
सशैलसागरां पृथ्वीं यथा वहसि मूर्धनि ।
तथा मां वह कल्याणसम्पत्सन्ततिभिः सह ॥

गृहप्रवेश– एवं वास्तुशान्तिं कृतः सपत्नीकः यजमानः गृहप्रवेशदिने स्वस्तिपुण्याहं वाचयित्वा, नान्दीश्राद्धं (हिरण्येन वा) विधाय, ग्रहपूजां कृत्वा, नवधान्यफलदानानि कृत्वा, तुलसीवृन्दावने भुवनेश्वरीपूजनपूर्वक तुलसीवृक्षमारोप्य, ज्योतिर्विदुक्ते मुहूर्ते गृहद्वार्युपविश्य, देहल्यां गणपतिपूजनपूर्वक महालक्ष्मीं गृहवास्तुञ्च सम्पूज्य, गृहं प्रार्थयेत् ।

धर्मार्थकामसिध्यर्थं पत्रपौत्राभिवृद्धये ।
त्वामहं प्रविशाम्यद्य भगो मन्दिर ते नमः ॥
यावत्सूर्यश्च चन्द्रश्च यावत्तिष्ठति मेदिनी ।
तावत्त्वं मम वंशस्य मङ्गलाभ्युदयं कुरु ॥
ततो मङ्गलवाद्यघोषपुरःसरं स्वतिसूक्त शकुन्तसूक्त पठनपरान् द्विजानग्रतः कृत्वा, पत्न्या दीपं, क्षीरपूर्णपात्रं, अन्यैः दधि दर्पण जलपूर्णकुन्भ धान्यग्रन्थि तण्डुलपूर्णपात्र हिरण्य नूतनवस्त्र धनपेटिका तूलिका देवतार्चनवस्तु पूर्णफलादीनि ग्राहयिवा, स्वयं गृहदेवतां गृहीत्वा, अक्षतगन्धपुष्पाम्रपल्लवोपेतकलशहस्तैः सुवासिनीभिः सह गृहं प्रदक्षिणीकृत्य,
भद्रान्गृहान्सुमनसः प्रपद्येऽवीरघ्नीवीरवतस्सुवीरान् ।
इरां वहन्तो घृतमुक्षमाणास्त्वेष्वहं सुमनाः संविशानि ॥
इति गृहप्रवेशनं कुर्यात् ॥
ततो देवताद्रव्यादीनि तत्तत्स्थानेषु स्थापयित्वा, (तण्डुलामुद्गगोधूमा हरिद्रागुडधान्यकम् । कार्पाससूत्रं डोलादि देवतार्चनवस्तुकम् । पेटिकां धनहेमादि वस्त्रं मङ्गलद्रव्यकम् । इत्येवमादि वस्तूनि तत्तत्स्थानेषु स्थापयेत् ॥) यजमानः, पत्न्या सुवासिनीभिः सह उत्सेकितं शर्करायुक्तक्षीरं, पायसान्नादीनि च निवेद्य, गृहदेवतां पूजयेत् ॥
(ततः ग्रहमखादीनि कृत्वा) कर्मान्ते ब्राह्मणैः स्वस्ति वाचयित्वा, आचार्याय सवत्सगां, ऋत्विग्भ्यः अज वस्त्रयुग्म हिरण्यदानानि,

यथासम्भवदक्षिणानि च दत्वा, कर्मसाङ्गतासिद्ध्यर्थं यथाशक्तिब्राह्मणान् भोजयित्वा, तैराशिषो गृहीत्वा, स्वयं भुञ्जीत ॥

॥ स्वस्ति ॥